अथास्य दक्षिणेन पाणिना दक्षिणं पाणिं गृह्णाति। सम्पातरोक्रान्न्तरभिदं प्रहस्तं पुंसः प्रजाः कामयमानः प्रहस्तं मणिबन्धप्रदेशं गृह्णाति . . . . .इत्येकविंशः खण्डः ॥

प्रस्थितमनु मन्त्रयते। पूषात्वेतो नयतु । हस्तगृह्याश्विनौ त्वा प्रवहतां रथेन.। गृहान् गच्छ गृहपत्नी यथासो वशिनी त्वं वितथमावदासीति । पितृगृहाद्भर्तृगृहं प्रस्थितां त्वा त्वां पूषा इतः पितृगृहात् पतिगृहं हस्तगृह्य हस्ते गृहीत्वा नयतु अश्विनौ त्वा रथेन प्रवहताम् ॥ . . . . विवाहः समाप्तः । इति द्वाविंशः खण्डः ॥

सायं प्रातर्होमे—विधिं वक्ष्याम इति शेषः। अग्नय इति प्रथमामाहुतिं जुहोति। प्रजापतय इत्युत्तरां सायमिति शेषः। आज्यं पयो व्रीहिर्वा होमद्रव्यं एवं प्रातः अग्निस्थाने सूर्यः अयं विशेष इत्यर्थः ॥ . . वैश्वदेवं समाप्तं। इति त्रयोविंशः खण्डः ॥

नवेन यक्ष्यमाणः पुराणेनाग्रे यजेताग्निधन्वन्तरीप्रजापतिमिन्द्रम्—नवविकारेण चरुणा यक्ष्यमाणः तज्जातीयेनैव पुराणविकारेण चरुणा अग्रे अग्निधन्वन्तरी प्रजापतिमिन्द्रं च यजेत ॥ . . . . . .
इति चतुर्विंशः खण्डः ॥

श्रीनिवासाध्वरिकृता टीकेयमतिलघ्व्यपि ।
सुमतीनां भवेन्नित्यं संतोषाय सुबोधिनी ॥

श्राद्धं करिष्यन्तः सुताः शुचिवाससः तिलैर्वास्त्ववकीर्य सव्यं आचरन्तोऽन्नमुपसाधयेरन् हविष्यैरुपसिच्यैव ॥ . . . . . .
इति प्रथमः खण्डः ॥

शेषमनुज्ञाप्य प्रत्येत्य प्राग्दक्षिणायतं चतुरश्रं गोमयेनोपलिप्य अपहता असुरा रक्षांसि पिशाचाः पितृषद इति मध्ये रेखां काष्ठेनोल्लिख्य

ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति. . . .
इति द्वितीयः खण्डः ॥

ऊर्ध्वमाग्रहायण्याः त्रयोऽपरपक्षास्तेषामेकैकस्मिन्नेकैकाष्टका भवन्ति । शाकाष्टका मांसाष्टकाऽपूपाष्टकेति मार्गशीर्षमासे या पौर्णमासी सा आग्रहायणी. . . अष्टम्यां कर्तव्या श्राद्धक्रिया अष्टकेत्युच्यते. . . . . इति तृतीयः खण्डः ॥

इतः परमाहिताग्नेः शरीरनाशेत्यादि दहनादि सापिण्ड्यान्तविधायक सूत्राण्यन्ते व्याख्यास्यन्ते अथातो गृहकर्मणो गृहवृद्धिमिच्छन् मासि मासि ऋतावृतौ वत्सरे वत्सरे वा पूर्वपक्षे पुण्ये नक्षत्रे गृहशान्तिमारभेत गृहकर्मणः गृहस्थाश्रमधर्मस्य सिध्यर्थम्. . . . . . .
इति चतुर्थः खण्डः.

अथातो . . . . कल्पं व्याख्यास्यामः अथातः अनश्नता प्रयोक्तव्यसंहिता अनश्नत्संहिता तत्प्रयोगविधिं व्यख्यास्याम इत्यर्थः शुचिवासाः स्याच्चीरवासा वा अनश्नत्संहितायाः प्रयोक्ता शुक्लवासाः चीरवासाः स्यात्.

* * * * *

End:

तावत्कालं ऋग्वेदाद्यजुर्वेदात्सामवेदाद्वा यज्जानीयात् यावती ऋचः यावन्ति यजूंषि यावन्ति वा सामानि जानीयात् तान्यधीयीत ॥ समाप्तो यं ग्रन्थः ॥

---

## 5. वैखानससूत्रम्.

Beginning:

अथ निषेकादिसंस्कारान् व्याख्यास्यामो ऋतुसङ्गमनगर्भाधानपुंसवनसीमन्तविष्णुबलिजातकर्मोत्थाननामकरणान्नप्राशनप्रवासागमन-

पिण्डवर्धनचौलकोपनयनपारायणव्रतबन्धविसर्गोपाकर्मसमावर्तनपाणिग्रहणानीत्यष्टादशसंस्काराः शारीराः । यज्ञाश्च द्वाविंशत् । ब्रह्मयज्ञो देवयज्ञः पितृयज्ञो भूतयज्ञमनुष्ययज्ञाविति । पञ्चानामहरहरनुष्ठानं स्थालीपाकमाग्रयणमष्टका पिण्डपितृयज्ञो मासि श्राद्ध श्चैत्राश्वयुजाविति सप्त पाकयज्ञाः । अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणेष्टिचातुर्मास्यनिरूढपशुबन्धसौत्रामणीति सप्तहविर्यज्ञाः । अग्निष्टोमोऽत्यग्निष्टोमोक्थ्यः षोडशी वाजपेयमतिरात्रोऽप्तोर्याम इति सप्त सोमयज्ञाः । इत्येते चत्वारिंशत् भवन्ति । निषेकादाजातकास्संस्काराः । ब्राह्मण्यां ब्राह्मणाज्जातमात्रोपनीतः सावित्र्यध्ययनाद्ब्राह्मणो वेदमधीत्य शारीरैः पाणिग्रहणात्संस्कृतः पाकयज्ञैरप्ययजच्छ्रोत्रियः स्वाध्यायपरश्चाहिताग्निर्हविर्यज्ञैरप्यनूचानस्सोमयज्ञैरपि भ्रूणः संस्कारैरेतैरुपेतो नियमयमाभ्यामृषिकल्पस्साङ्गचतुर्वेदतपोयोगादृषिर्नारायणपरायणो निर्द्वन्द्वो मुनिरिति संस्कारविशेषात्पूर्वात्पूर्वात्परो वरीयानिति विज्ञायते ॥

* * * *

अथ निषेकाद्यथ चतुराश्रमिणामथापो नमस्कृत्याचम्य कौरुक्षेत्रमशक्तो नित्यमथ पुण्याहं देवा ऋषयः अथाग्न्याधेयमथागारविधानं पात्रादाघावं वायव्यमुत्तराग्रं भूसुवं दक्षिणप्रणिधौ गायत्र्या समिधः स्रुवेणाज्यं स्रावयन् अथ सामान्यत इमं मे वरुण ऋताषाडथान्तेहोममन्त्रास्तत्पात्रेणाघावं पुनर्देवेभ्यो हव्यं वहेत्येकविंशतिः । प्रथमः प्रश्नः समाप्तः ॥

अथ शारीरेषु संस्कारेषु ऋतुसंगमनवर्जं नान्दीमुखं कुर्यात् । श्वः कर्तास्मीति गर्भाधानादिक्रिया यदहः करोति तदहर्नान्दी भवति तस्या मुखं सर्वदेवपितृदैवत्यं नान्दीमुखमभ्युदयश्राद्धं दैविकवत् करोति । पूर्वेद्युरेव पूर्वाह्णे युग्मान् ब्राह्मणान् सुप्रक्षालितपाणिपादान् श्रोत्रियानन्नेन परिवेष्ट्याथेलामभ्युक्ष्याथावनीदमिति मण्डलान्युपलिप्य अस्त्वासनमि-

त्यासनानि सदर्भयवानि निधाय तेष्वासीनां पुष्पाद्यैर्यथोपपादमलङ्करोति शुक्लं बलिश्वेतसर्षपदधितण्डुलमित्यामनन्ति। चतुश्शुक्लमेनदादायाग्नेर्दक्षिणतोऽग्नये सोमाय प्रजेशाय विश्वेभ्यो देवेभ्यो ऋषिभ्यः पितृभ्यो भूतेभ्यस्सर्वाभ्यो देवताभ्यो नम इत्यन्तैस्तन्नाम्ना पुष्पादिभिरभ्यर्च्य बलिं ददाति ॥

*　　　*　　　*　　　*

पैतृकादिकमृणत्रयं जायमानस्य ब्राह्मणस्य सहजातमित्युक्त्वा वारयेदिति विखनाः प्राह ॥ १८ ॥

अथ शारीरेषु चरुमपूपाद्यथ गर्भाधानादि ब्राह्मणस्य पालाशप्रोष्ठपदहस्तौ तनो विधिवदाचमनं धातादिपूर्वमग्निष्ट आयुरिति दण्डमथ पारायणव्रतानि सोमाय काण्डऋषये तथैव धातादि अथाषाढोपाकर्माथ समावर्तनं दिवि श्रयस्वेति तदग्नावुपरिधारयन्तस्तत्रोपवेश्य द्यौस्त्वाददात्वथ प्राणाग्निहोत्रविधानमित्यष्टादश ॥

इति गृह्ये द्वितीयः प्रश्नः.

अथ पाणिग्रहणमष्टौ विवाहा भवन्ति ब्राह्मो दैवः प्राजापत्य आर्षासुरो गान्धर्वराक्षसः पैशाच इति। यदभिरूपं युक्तवयस्संपन्नमाहूयार्हयित्वा कन्यालंकृता दास्यते स ब्राह्म इति गीयते। यदृत्विजो यज्ञस्यात्मनोऽलङ्कृत्य कन्यां प्रतिपादयति स दैवः। युगपद्धर्मानुवर्तिनौ स्यातामिति वाचानुमान्याग्निकार्यं स्वयं कृत्वा दद्यात् स प्राजापत्यो भवति। यद्गोमिथु (नें) नैकेन द्वाभ्यां वा कन्यां ददाति तमार्षमाचक्षते। यत्कन्यामाभरणमारोप्य शक्त्या बन्धुभ्यो धनं दत्वा हरते तमासुरमामनन्ति। कामयोगो यदुभयोस्स गान्धर्वः। प्रसह्य यत् कन्याहरणं स राक्षसः। सुप्तां प्रमत्तां वा रहसि यद्गच्छति स पैशाचो भवति। एषां प्रथमे चत्वारस्तोयप्रदानपूर्वकाश्शस्ता ब्राह्मणस्य। नेतरे जघन्याः यस्मात्रीन् पूर्वान्

त्रीनपरान् आर्षजातः षट्पूर्वान् षडवरान् प्राजापत्येनोढाया जातः सप्त पूर्वान् सप्तावरान् दैवीसुतो दश पूर्वान् दशापरानात्मानं चैकविंश तिकं ब्राह्मे पुत्रः प्रापयेदिति ॥ १ ॥

* * * *

ब्राह्मणानामन्नेन करोतीत्यष्टादश संस्काराः शारीराः ॥ 23 ॥ अथातः पाणिग्रहणं मातुरसपिण्डां ततः सह स्नातायाविश्वा उदुत्वेत्यथ चतुर्थीवास अत ऊर्ध्वं पर्वणि स्थालीपाकं वचने वावसत्थ्ये तदेवं त्रिरात्रं अथ गृहीतगर्भलिङ्गान्यथ गर्भाधानादि अथ चतुर्थे मास्यथ गर्भाधानाद्यष्टमे मास्यथ विष्णुबलिमथ जातकं चुल्यां कपालमथ वास्तुसवनमेते शनमथ दशमे द्वादशे वाह्नि अथ नामकरणमथ वर्षवर्धन मार्षभं वैरवणमथ षष्ठे मास्यन्नप्राशनमथ वर्षे प्रथमे त्रयोविंशतिः ॥24॥

इति गृह्ये तृतीयः प्रश्नः समाप्तः ॥

अथ स्थालीपाकमग्नेः पश्चिमतस्तिष्ठन् प्राङ्मुखः प्राणायामं धारयत्येकविंशतीध्मान् संगृह्य दर्भदर्वीस्त्रुक्स्त्रुवप्रणीताज्यस्थालीरग्नेरुत्तरेऽवाङ्मुखं सन्यस्योद्धरेत्यग्निमुद्धर्येन्धनैरिन्धयेत्। वेदिं परिमृज्य प्रागाद्युत्तरान्तं दर्भानास्तीर्य इध्मादीनग्निकुण्डं च प्रोक्षयति। प्रणीतामासाद्यं पवित्रं निधायाद्भिः पूरयति पृथिव्यापो गृह्णिष्यामीति । पूर्ववदुत्पूयोत्तरे निधायाज्यस्थालीं गृहीत्वा पूर्ववदाज्यं संस्कृत्य चतुर्थीवदाग्नेयं चरुं स्थाल्यां पक्वाग्निं समूह्य देवस्यत्वेति दर्वीमादाय प्रक्षाल्योत्तराग्रं निधाय इध्मादीन् गृहीत्वाज्यमनक्त्वेकमनूयाजमपोह्य त्रीन् परिधीनाघारौ च पूर्ववन्निधाय शेषान् पञ्चदशेध्मान् प्राणायामेनाग्नौ क्षिपत्याज्येन आघारौ संस्राव्य हुत्वाग्नये सोमायेति जुहोति। दर्व्या चरुं गृहीत्वाभिघार्यावदानं गृहीत्वाग्नये स्वाहाग्नये स्विष्टकृते स्वाहेति हुत्वात्रानूयाजमग्नौ प्रक्षिप्य प्राजापत्यं जयादीन्व्याहृतीश्च पाहि नो अग्न ऐनसे पाहि नो विश्ववेदसे । यज्ञं पाहि सर्वं पाहि कामावकीर्णः कामाभिद्रुग्धः संमा समुद्रादिति । स्विष्टकारं च

जुहोति । परिषिच्य प्रणिधींश्चलयति । भस्मालिप्यात्मानं प्रोक्षयाग्निं वैश्वानरसूक्तेनोपस्थाय प्राणायामेन दर्भांश्चतुर्दिशमुत्थाप्याद्भिः प्रोक्ष्य द्वावपोह्यान्यानाप्यायन्त्वमिति जुहोति । द्रवपि गृहीत्वाद्भिः प्रोक्ष्याग्नये स्वाहा सोमाय स्वाहेति हुत्वा त्रीन् परिधीनाघारसमिधौ च जुहुयात् । धार्यं कर्तुमशक्तः समिधि स्वात्मन्यरण्यां वा समारोपयेदिति विज्ञायते ॥ 1 ॥

*　　*　　*　　*

अथाश्वयुजे मासि आश्वयुज्यां पौर्णमास्यां गोष्ठेऽग्निं समाधायाघारं जुहुयादग्नेः प्राच्यां भवं देवमावाह्याभ्यर्च्य तृणानि संभृत्य गाः स्थापयति भवायेति स्थाल्यां निवापश्रपणं कृत्वाग्नौ परिषेकं कुर्यात् । भवाय शर्वायेशानाय पशुपतये उग्राय रुद्राय भीमाय महादेवाय स्वाहेति रुद्रमन्त्यं त्र्यम्बकमित्याज्यहोमान्ते मेक्षणेन चरुमवदायाभिघार्य अवदानं संगृह्य पूर्ववज्जुहुयात् । अर्कपत्रे देवं चरुं निवेद्याज्यशेषेण तृणान्यभ्युक्ष्य गोभ्यः प्रदाय प्रदक्षिणनमस्कारौ करोतीति विज्ञायते ॥ 9 ॥

गृहपूजां पुरस्कृत्य सर्वकर्म समारभेदिति विज्ञायते ॥ 4 ॥

अथ स्थालीपाकमथ सनीव्रीह्यष्टकान् दक्षिणपश्चिमेऽग्नेरथानोऽमावास्यायां यजमानः प्राचीनः प्राचीनावीत्यथ श्राद्धं मासि मास्यथ चैत्रीमथाश्वयुजीमथाग्नौ नित्यहोमान्ते कालविहीनं कुम्भमथ नित्यार्चनमथ गृहशान्ति तदधिपांस्तदर्हेति चतुर्दश ॥ 15 ॥

इति गृह्ये चतुर्थः प्रश्नः.

अथाहिताग्नेः पत्न्या गृहस्थस्य स्त्रिया ब्रह्मचारिणोऽनारोपितकार्यस्य दहनविधिं व्याख्यास्यामो यथोक्तैस्सैर्वादिकैररिष्टैरायुरात्मीयं परीक्ष्य तृतीये पञ्चमे नवमे चाह्नि मुमूर्षुर्बान्धवान् सविधानाहूय पूर्वं प्रियंभावित्वैकसंभोगं पारलौकिकं चात्मने विभजेत् । उपस्थितेऽहनि शुचौ प्रदेशे सिकतातले दर्भान् प्रागग्रानास्तृणाति दक्षिणाग्रानित्येके । तत्रासीन

शयीत वा दक्षिणशीर्षमस्याध्वर्युश्शं नो मित्र इति शान्तिमात्मनः कृत्वायुषः प्राणमिति मुमूर्षोर्दक्षिणे कर्णे जपेत् संज्ञानमिति वामे च। प्राप्ते प्रयाणकाले शुक्लमहोमासाष्षडुत्तरायणमग्निर्ज्योतिरनेन पथा ब्रह्मपदं पुनरावृत्त्याभ्येति धूमः कृष्णो रात्रिर्मासाष्षट् दक्षिणायनं चान्द्रमसमेतज्ज्योतिः प्राप्यते निवर्तत इति गती चोभे विज्ञाय शान्तिं ज्योतिष्मतीं जपतीन्द्रियाणीन्द्रियार्थेषु निरुध्य क्रमेण घण्टावसानिके पदत्रये निविष्टे नानाविधे स्वयं ज्योतिषि ब्रह्मण्यद्वितीये तद्योसौ सोऽहमित्यात्मोपासनक्रमेण वा समादधीत। यस्मात् प्रयाणकाले यं ध्यायति तन्मय एष भवत्यात्मेति ब्रह्मवादिनो वदन्ति तदेवं देवकृते प्रतिसंहारे गन्धात्मकं भूमेर्गुणमापः प्रथमं ग्रसन्ति। तदादि बाधितोऽग्निः प्रविश्य प्राणयातनमर्माणि दारयन्नाडीमुखेभ्यो रसं दहति। तदा दह्यमानमिव शरीरं मन्यते। ततः कीलालं शुष्यति। मुक्तबन्धे श्लेष्मणि पित्तेन सहाग्नौ पतिते स चाग्निरर्थाभावाच्छाम्यति। वायुःसतिर्यगूर्ध्वमधश्चैव शरीरं व्यालोलयति। तस्मान्मुह्यति। तदा स्वैस्स्वैः कर्मभिरुन्मुक्ताः पञ्च वायवो विसृजन्त्यात्मनःस्थितिमभिनिष्क्रामतश्चोर्ध्वश्वासो ब्राह्ममुक्त्या दृतेरिव मन्दं मन्दमूष्माणमुदावहति। तदा वेगेनोत्थाय वायुर्मूर्तिमन्निवकण्ठे खुरुखुरायमाणो विश्वमेव विहरन् जलूकवत् पदात् पदान्तरं विन्दन्नुत्क्रामति धर्माधर्मोर्ध्वभावोधोभावश्च ज्ञानात् ज्ञानसुखदुःखाच्चेश्वर वशात्तेन सह प्रतिष्ठेयाताम्॥ 1 ॥

*　　　*　　　*　　　*

तस्माद्द्वितीये तृतीये चान्हि तेभ्यस्त्रयाणां पिण्डानां क्रमेण क्रमेण निर्वापणमष्टकां करोतीति विज्ञायते॥ 15 ॥

अथाहिताग्नेः अथो विगतानिलचेष्टं पूर्ववत्पूजनं तिलतण्डुलदधिमधुक्षीराणामनाहिताग्नेस्तोपवीती स्नात्वा गुरवे यो ह वै धर्माधर्मौ

अथापदाह्य अथावटाहिनमथादाह्यानाथाकृनिदहनमथैकोद्दिष्टं अथ तथा मासि मासि पूर्ववद्यथोक्ते स्थानेति पञ्चदश.

इति गृह्ये पञ्चमः प्रश्नः.

अथ निषेकादिसंस्काराणां प्रायश्चित्तं व्याख्यास्यामः। स्नात्वा सङ्कल्प्य पुण्याहे विधिवत् संस्कारान् कुर्यात् । चतुर्दिशं चतुर्हस्तं गोचर्मेत्युक्तं गोचर्ममात्रोपलिते पूर्ववदग्निं निधायाभिमुखमासीनमग्निं ध्यात्वाघारं जुहुयात्। पर्वस्यादावाघारे क्रियालोपे विपर्यासे च व्याहृती-र्महाव्याहृतीर्गायत्रीं सावित्रीं मिन्दाहुतीर्वैष्णवं च द्विरावृत्या हुत्वा पुनरा-घारं जुहोति। स्थण्डिले परिस्तरणादिसंभारे च प्रमाणवर्जितो हीने इन्द्रा-हुति सावित्रीं व्याहृतीश्च जुहुयात्। ऋत्विजोरभावे दक्षिणोत्तरयोः प्रागग्रं कूर्चं निधाय ब्रह्मसोमौ संङ्कल्पयति। सर्वयुग्मं प्राच्यामुदीच्यां वाग्रमन्त श्च दैविके करोति। सर्वमयुग्मं दक्षिणपश्चिमस्यां वाग्रमन्तश्च करोति। होमे न्यूनेऽतिरिक्ते च पूर्णाहुतिं मिन्दाहुतीर्जुहोति। विशेषेऽनुक्ते स्रुवेण होतव्य-माज्यं हविर्व्याहृतीर्मन्त्रं प्रायश्चित्तेऽनुक्ते वैष्णवं प्रायश्चित्तमन्नावाज्ये चरौ वा मक्षिकाकृमिरोमपिपीलिकादिपतने तव्द्यपोह्य बर्हिषोद्दीप्य प्राजापत्य-माग्नेयमग्न्यायतने गोवराहश्वसर्पमण्डूकमार्जाराद्यैर्गमने तत्पदानीदं विष्णु-रिति प्रोक्ष्य वैष्णवं रौद्रं च परिस्तरणादिसंभाराणां दाहभेदे च्छेदे नाशे च तत्तत्स्थाने संयोज्य मिन्दाहुतीः द्विरावृत्या जुहुयात्। आघारे कृते तस्मिन्नग्नौ समुत्सन्नेऽग्निं ध्यात्वा तद्भस्मादीयन्ते योनिरिति समिध-मारोप्य उद्बुध्यस्वेति लौकिकाग्नौ समिधं निधायोज्वाल्य परिषिच्यमानो ज्योतिरयाश्चाग्नेमिन्दाहुतीर्व्याहृतीश्च जुहुयात्पर्वहोमान्ते स्विष्टकृत् प्रभृत्यन्तहोमे हीने विष्णोर्नुकादिमिन्दाहुत्या श्राविष्ठादीन् जुहु-यात् ॥ 1 ॥

* * * *

ब्राह्मणो ब्राह्मणीं नग्निकां गौरीं वा कन्यां क्षत्रियः क्षत्रियां वैश्यो वैश्यां। वरयेदष्टवर्षां दशमां नग्निकां रजस्यप्राप्ते दशवर्षाद्द्वादशात् गौरीमित्यामनन्ति ।

*    *    *    *

कर्तयावित्येके होमं हुत्वा राक्षसपैशाचौ वेत्यपरेऽन्यथाकन्यागमनप्रायश्चित्तं करोति ॥ 12 ॥

*    *    *    *

पुरुषसूक्तविष्णुसूक्ताभ्यां हुत्वा पूर्ववदभ्यर्च्य हविर्निवेदयति ॥20॥

अथ निषेकादिसंस्काराणां ऋतुसङ्गमनगर्भाधाने कालेऽतीते कुमारश्च कुमारी च नक्षत्रहोमे हीने अथ निषेकादीनां ब्राह्मण्यं ब्राह्मणात् उपनयनप्रभृति अथातः पुनराधानं अथावकीर्णिप्रायश्चित्तं अथातः पुनरुपनयनं पारायणव्रतबन्धविसर्गे च ब्राह्मणो ब्राह्मणीं रजःप्राप्तौ परदेशगते ज्येष्ठे पाणिग्रहणप्रभृति ब्रह्मयज्ञो देवयज्ञो गृहे होमे हीने अथातः पाकयज्ञस्थानां पिण्डपितृयज्ञो मासि श्राद्धे चैकविंशतिः.

इति गृह्ये षष्ठः प्रश्नः.

अथ मृतसंस्कारप्रायाश्चित्तं जातकसंस्कारो मृतसंस्कारश्चेति द्वौ संस्कारौ भवतः पूर्वेणेमं लोकं परेण परलोकं जयति मृतस्य संस्कारः शारीरमस्य दहनमित्याहुः। निर्दोषकस्य शरीराहुतिरग्नेः प्रियतमा भवति तया आहुत्या समृतकोदेवलोकं गच्छति । मातापित्रोः पुत्रोऽन्यो भ्राता सपिण्डस्सगोत्रः पितुर्मातुश्च योनिबन्धुर्गुरुश्शिष्यर्त्विजो वा पत्न्याश्च पतिस्सुतः पत्युर्भ्राता सपिण्डस्सगोत्रः पितुर्मातुश्च योनिबन्धुर्वा पुत्रस्य पित्रादयो मृतस्य शरीरं दाहयन्ति। मृतस्य संस्कारे कृते संस्कर्तुः सर्वसंपत्समृद्धिः स्यात् अन्यथा भ्रूणहत्यामवाप्नोति । तस्माद्ब्रह्ममेधेन वा विधानेन पूर्ववदग्निर्यजुर्भिस्सोनेन्द्रस्य वाचस्पते विधेनामन्वाचस्पते वाचो

वीर्येण सोमस्सोमस्य वाचस्पते च्छिद्रयावाचोनेति सप्तभिर्मन्त्रैराहिताग्ने श्शरीरं पश्चाग्निभिर्वा दाहयत्याग्निर्यजुर्भिस्सेनेन्द्रस्येति द्वाभ्यामौपासनाग्निना गृहस्थानाहिताग्निं तदुपनयनाग्निना ब्रह्मचारिणं च दाहयेदस्मात्त्वमसिभूः पृथिवीं गच्छतु भुवोऽन्तरिक्षं गच्छतु सुवर्दिवं गच्छत्विवाते चतुर्मन्त्रैरित्येके ॥ 1 ॥

* * * *

एवमुत्पाद्य पूर्वोक्तेन विधिना दहनं कुर्यात् ॥ 9 ॥

अथ मृतसंस्कारप्रायश्चित्तमाहिताग्निरनाहिताग्निश्च शावेऽन्याशौचयुक्ते सगर्भाया मरणे उपनयनादूर्ध्वं प्रेतं ज्ञातिं च जानदन्यस्य पूर्वेद्युः द्वौ विश्वेदेवौ अथ गृहस्थस्यौपासनेति नव.

इति गृह्ये सप्तमः प्रश्नः.

## वैखानसधर्मसूत्रम्.

अथ वर्णाश्रमधर्मः ब्राह्मणक्षत्रियवैश्यशूद्रा मुखबाहूरुपादेषु जाताश्चत्वारो वर्णाः यस्माद्ब्राह्मणोऽस्य मुखमासीदिति श्रुतिः पूर्वेषां त्रयाणां निषेकाद्यास्संस्काराः विधीयन्ते ॥ तेषां द्विजन्मनां वेदाधिकारः तस्माद्ब्राह्मणस्याध्ययनाध्यापनयजनयाजनदानप्रतिग्रहाणि षट् कर्माणि भवन्ति। क्षत्रियवैश्ययोर्यजनाध्ययनदानानि। क्षत्रियस्य प्रजापालनदुष्टनिग्रहयुद्धाः। वैश्यस्य पशुपाल्यकुसीदवाणिज्यं च। शूद्रस्य द्विजन्मनां शुश्रूषा कृषिश्चैव। ब्राह्मणस्याश्रमाश्चत्वारः क्षत्रियस्याद्यास्त्रयः वैश्यस्य द्वावेव तदाश्रमिणश्चत्वारो ब्रह्मचारी गृहस्थो वानप्रस्थो भिक्षुरिति ॥ 1 ॥

* * * *

सगुणे ब्रह्मणि बुद्धिं निवेश्य पश्चान्निर्गुणब्रह्माश्रित्य यत्नं कुर्यादिति विज्ञायते ॥ 11 ॥

अथ वर्णाश्रमधर्ममुपनीतो ब्रह्मचारी ब्रह्मचारिणश्चतुर्विधा दारान् संगृह्य गृहस्थाश्चतुष्टया गृहस्थस्सपत्नीक अपत्नीका बहुविधा भिक्षुका मोक्षार्थिनः निवृत्याचारभेदादयैकार्ष्यादित्येकादश.

इति धर्मे प्रथमः प्रश्नः.

अथ वनस्थः श्रामणकं गृहस्थस्सोमयाजी पुत्रपौत्रं च दृष्ट्वा तत्पुत्रादीन् गृहस्थे संस्थाप्य मौण्ड्यं कृत्वा प्राजापत्यं कृच्छ्रं चरेत्। वसन्ते शुक्लपक्षे पुण्यर्क्षे पत्न्या सार्धं वनाश्रमं याति। पूर्वस्मिन् दिवसे कृतस्नानं संकल्प्य कुशोदकं पीत्वा उपवासं कुर्यात्। औपासनहोमं हुत्वाग्निमयं ते योनिरित्यरण्यामारोपयेत्। दर्शपूर्णमासविधानेन दर्भादीन् सङ्गृह्य पूर्ववत् कृर्चंदत्वा परिधीन् समिधो वेणुदण्डोपवीतकमण्डलुवल्कलादीन् संभरति। पूर्वोक्तविधिनाग्निकुण्डं कुर्यात् अपरस्मिन् दिवसे वैश्वानरसूक्तेनाग्निं मथित्वा प्रज्वाल्य अग्न आयाह्युपावरोहेत्यग्निं निधाय पूर्ववत् श्रामणकाग्न्याघारं जुहोति। प्रणम्याग्निं परिषिच्याग्ने-प्रायश्चित्ते त्वं इति पञ्च प्रायश्चित्तं हुत्वा आपो हिरण्यपवमानैरात्मानं प्रोक्ष्य दैवत्यं वैष्णवं पञ्चवारुणं च प्रधानान् व्याहृत्यन्तं यजेत् ॥ 1 ॥

* * * *

तपसां श्रामणमेतन्मूलं तस्मादेतद्विधानं एनमग्निं च श्रामणकमित्याह विखनाः ॥ 5 ॥

* * * *

नित्यं श्रुतिस्मृत्युदितं कर्म कुर्वन् मनोवाक्कायकर्मभिश्शनैर्धर्मं समाचरति ॥ 15 ॥

अथ वनस्थस्य श्रामणकाग्नेः प्रतीच्यां तत्पत्नी च अथाग्न्यायतने प्रोक्ष्य रात्रौ नाश्नीयात्। सन्यासक्रमः स्रुचि स्रुवेण देवस्य त्वा यो मे

दण्डं धर्म्यं सदाचारं ब्राह्मणो हृद्गाभिरन्ये बान्धवास्तद्भार्यापुत्रयोर्मध्याद्वे जले शुद्धे परस्योदके मृत्पिण्डास्तिलसक्तुदधिलाजं चेति पञ्चदश ॥

इति धर्मे द्वितीयः प्रश्नः ॥

गृहस्थाश्रमी द्वे यज्ञोपवीते वैणवं दण्डं कमण्डलुं च धारयेत्। स्नात्वा सभार्यो गृह्याग्नौ गृह्याणि कर्माणि श्रौताग्निषु श्रौतानि कुर्यात्। सायं च होमान्तेऽतिथीनभ्यागतान् प्राशयित्वा मितं प्राश्य पत्न्या शयीतार्द्रपादः प्रत्यगुत्तरशिराश्च न स्वपत्यृतुरात्रिषु स्वभार्यायामुपगच्छेत्। आदौ त्रिरात्रमृतुमतीगमनसहासनशयनानि वर्जयेत् । परदारान्न संगच्छेत् । परदारगमनादायुः श्रीर्ब्रह्मवर्चसं विनश्यति । भार्यया सह नाश्नाति । अश्नन्तीं तां जृम्भमाणां नग्नां च नावलोकयेत् । असत्यवादं वर्जयति । असत्यात्परं पापं सत्यात्परो धर्मश्च नास्ति । सर्वप्राणिहितोऽद्रोहेणैव जीवेत् । शुद्धार्थवान् कुसूलधान्यः कुम्भीधान्योऽश्वस्तनिको वा स्यात्। द्विजातिपतितान्त्यजातां न स्पृशेदुदयेऽच सूर्यं नेक्षेत । देवं गुरुं घृतक्षीरदधिमृत्तोयसमिद्भिर्भाग्निवनस्पतीन् प्रदक्षिणं गच्छेत् ॥ 1 ॥

* * * *

ततो ब्राह्मणाद्यास्सर्ववर्णायां विधिवत् पुत्रमुत्पादयेयुरिति ॥ 15 ॥

स्वाध्यायी भिक्षुः स्नात्वा गोदोहनकालमात्रं सन्यासिनो आहिताग्नेर्नारायणबलिं केशवाद्यैर्नामभिश्चातुर्वर्ण्यं सङ्करणे अयं धर्मः पञ्चामुत्पन्नो विप्राच्छूद्रायां वैश्यान्नृपायामम्बष्ठाद्विप्रायामिति पञ्चदश ॥

इति धर्मे तृतीयः प्रश्नः ॥

अथ ऋषिगोत्रप्रवरान्व्याख्यास्यामो विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकाश्यपानां सप्तऋषीणां अगस्त्यवियदापत्यगोत्रं तस्मिन् गोत्रे वराणां ऋषिणां प्रवराणां प्रवरः प्रवरकाले यजमानस्य प्रवरं यथोक्तं होता चाध्वर्युश्चाशंसति तेषां विश्वामित्रकौशिकानां त्र्यार्षेयः

प्रवरो भवति। विश्वामित्रो देवरातो देवल इति होता देवलवद्देवरातव-द्विश्वामित्रवदित्यध्वर्युरौक्ष्म्यानां त्र्यार्षेयो विश्वामित्ररौक्ष्म्यरैवणेति होता रैवद्रौकथ्र्यवद्विश्वामित्राध्वर्युर्वैश्वामित्रदेवश्रम(व)सदैवतरसनां त्र्यार्षेयो विश्वामित्रदैवश्रवसदैवतरसेति होता दैवतरसदेवश्रवसी विश्वामित्राध्वर्यु-र्लोहितानां त्र्यार्षेयो विश्वामित्राष्टकलोहितेति होता लोहितवदष्टकव-द्विश्वामित्रवदध्वर्यू राज्यानां त्र्यार्षेयो विश्वामित्रमधुच्छन्दोज्योतिर्होता-ज्यवन्मधुच्छन्दवद्विश्वामित्रवदध्वर्युः कान्तानां त्र्यार्षेयो वैश्वामित्रकादा-क्षिलेति होता क्षीलवत्कान्तवद्विश्वामित्रवदित्यध्वयुरघमर्षणकौशिकानां त्र्यार्षेयो विश्वामित्रोऽघमर्षणकौशिकेति होता कौशिकवदघमर्षणव-द्विश्वामित्रवदित्यध्वर्युरिन्द्राकौशिकानां त्र्यार्षेयो वैश्वामित्रेन्द्रकौशिकेति होता कौशिकवदिन्द्रवत् विश्वामित्रवदित्यध्वर्युः पौराणां त्र्यार्षेयो विश्व-मित्रपौराणेति होता पौराणवद्विश्वामित्रवदित्यध्वर्युः ॥ १ ॥

*　　*　　*　　*

वैश्यक्षात्रियाणां वैश्यानां च पुरोहितप्रवरो भवति मानवे मनुव-दिति विखनाः ॥

अथ ऋषिगोत्रप्रवरान् भार्गवजामदग्निवत्सानां भारद्वाजानां आङ्गीरसगौतमानां आत्रेयाणां वसिष्ठानां काश्यपानामागस्त्यानामित्यष्टौ॥

इति गृह्ये प्रवरप्रश्नः समाप्तः.

वैखानसगृह्ये एकादशप्रश्नः ॥ इति वैखानसगृह्यम्.

---

## 6. कपर्दिकारिका.

Beginning :

श्रुतिस्मृतिप्रबोधिता करिष्यते यदा तदा ।
स्वकर्म यत्तदादितो यतासुरागुरुं वदेत् ॥ 1 ॥

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥ 2 ॥

प्राचीः पूर्वमुदक्संस्थं दक्षिणारम्भमालिखेत् ।
अथोदीचीः पुरस्संस्थं पश्चिमारम्भमालिखेत् ॥ 3 ॥

अवाक्करोभ्युक्ष्य निधाय वह्निमुत्सिच्यते प्रोक्षणतोयशेषम् ।
प्राक्तोयमन्यन्निदधात्युदग्वा यथा बहिस्स्याच्च परिस्तराणाम् ॥ 4 ॥

दर्व्याज्यपात्रेण सह प्रयोज्य वैकङ्कती प्रोक्षणभाजनी स्रुक् ।
प्रणीतिपात्रेण सहेध्मदारूण्युपस्पृशेच्चापि घृते च दर्व्या ॥ 5 ॥

. . . . इति प्रथमः पटलः.

प्राणसम्यमनं प्रथमं भवेत् प्रेषणं सुहृदामभिमन्त्रणम् ।
सङ्गताय वराय समर्पिते स्वामिना तु वधूर्जलपूर्वकम् ॥ 1 ॥

स्थाप्यते च विवाहमहीतले पावको विधिवन्मधुपर्कः ।
गोत्रगो सहितोऽसहितोऽपि वा दीयते वरवृत्तसमीक्षया ॥ 2 ॥

एवमेव परापचिताय चाभ्रातृमन्त्रजपोऽथ समीक्षणम् ।
अत्र चागूःकरणं वरकन्ययोः भ्रुवोऽन्तरं यजुषा परिमृज्यते ॥ 3 ॥

. . . . . . . . . . इति द्वितीयः पटलः.

दर्व्यामनक्तचग्रमथेतरस्यां मध्यं समूलं त्रिरिहापि वा द्विः ।
पक्षे द्वितीये सकृदेव मूलं द्वितीयदर्व्यामितरे च दर्व्याम् ॥ 1 ॥

अनक्ति दर्व्योरपि वाग्रमध्ये स्थाल्यान्तु मूलं त्रिरिहापि वा द्विः ।
पक्षे तृतीये सकृदेव मूलं स्थाल्यामुपक्रम्य समञ्जसं स्यात् ॥ 2 ॥

. . . . . . . . . . . . इति तृतीयः पटलः.

साग्निः कुमारः स हि तेन चागूः कृत्वोपभुञ्ज्यादथ वाचनं च ।
उक्तं कुमारं ह्यपरारिसृज्यादनक्ति पूर्वं प्रतिवापनं च ॥ 1 ॥

यज्ञोपवीतकालस्स्याद्वाचने कृत आशिषः ।
पुरस्तात् समिदाधानात् शिवस्वामिमतेन तु ॥ 2 ॥
पात्रप्रयोगे तु कुशाम्बुकूर्चा वस्त्राश्मदण्डाजिनमेखलाश्च ।
दैवानि पात्राणि नियुज्य पश्चाद्युञ्जीत चामूनि सहोपनेता ॥ 3 ॥
. . . . . . . . . . इति चतुर्थः पटलः.

सूत्रे वस्त्रे मणियुगसमित्स्रक्षु गन्धौ प्रवृत्तौ
शीतोष्णांबुक्षुरकटयवच्छत्रदण्डाञ्जनानि ।
आदर्शोपानद्वयकुशशकृत्स्नानचूर्णोदपात्रे
स्नास्यन्युञ्ज्यात् सकृदिह नरः काष्ठमौदुम्बरं च ॥ 1 ॥
स्नातकाय सकृन्मधुपर्कको गृह्यकं श्रुतिचोदितमेव वा ।
स्नानमाचरता दिवसे यत्तस्य नक्तमथापिच इष्यते ॥ 2 ॥
इति पञ्चमः पटलः.

यवा विरूढाः शलली सपुञ्जा ग्लप्सो यवानामभिवन्दनं च ।
एतानि सीमन्तविधौ प्रयुञ्ज्यात् पात्राणि साकं खलु मानुषाणि ॥ 1 ॥
फलद्वयेन सम्युक्तं वटाङ्कुरं द्वषत्सुतौ ।
सुपावनाय वस्त्रकं क्षिपेत्सहैव पुंसवे ॥ 2 ॥
. . . . . . . . . . इति षष्ठः पठलः

बाह्यतः स्वगृहाद्व्रजनं भवेत् सक्तुभिर्हरणं त्वितरेण वा ।
तक्षकादिपुनर्व्रजनान्तिकं नित्यमौत्तरणादथ इष्यते ॥ 1 ॥
त्रिभिर्यथोढं परिधाय मन्त्रैस्तथा परैर्मुख्यकुटौ त्रिभिस्तु ।
त्रिभिर्यथोढं पुनरुक्तमेकं मुख्यस्य संवेष्टि कपर्दिशिष्यः ॥ 2 ॥
. . . . . . . . . . इति सप्तमः पटलः.

आधारदार्वग्निमुखाज्यभागप्रदक्षिणानुव्रजनेषु चित्ते ।
आघारयोः स्विष्टकृति प्रसिद्धं यज्ञोपवीतं हि कपर्दिनोक्तम् ॥ 1 ॥

कार्यस्तथा सप्तभिरन्नहोमाः स्वाहादिमन्त्रैरथसर्पिषा स्युः ।
सकृत्सकृत्स्विष्टकृतं च हुत्वा त्रिभ्यस्तु पिण्डा इह पश्चिमाः स्युः ॥ 2 ॥
. . . . . . . . . . इत्यष्टमः पटलः.

श्रियः पतिं प्रणम्याथ प्रदर्श्यन्तेऽधुना स्फुटम् ।
आपस्तम्बीयगृह्यस्य होममन्त्रोक्तदेवताः ॥ 1 ॥
आघारयोः प्रजापतिरपि चेन्द्रः परस्य तु ।
अग्नीषोमौ क्रमात् प्रोक्ते देवते आज्यभागयोः ॥ 2 ॥
. . . . . . . . . . इति नवमः पटलः.

आगूर्विधानेन च दारुदर्भौ विप्रान्निमन्त्र्य स्थललेखनादि ।
स्रुगादिभिः पैतृकपात्रयोगे पूर्णे जलेऽर्घ्यग्रहदर्भपर्णैः ॥ 1 ॥
प्रच्छादनं ब्रह्मनिवेशनादिमुखाहुतिं चात्र पुनर्निमन्त्र्य ।
प्रक्षाल्य पादानथ तु क्षणान्ते वः पात्रमित्यादिकमर्घ्यदानम् ॥ 2 ॥
. . . . . . . . . . इति दशमः पटलः.

कपर्दिऋषिणा उक्ताः कारिकाः समाप्ताः.

---

## 7. अमोघवृत्तिः.

Beginning :

श्रीवीरममृतं ज्योतिर्नत्वादिं सर्ववेदिनाम् ।
शब्दानुशासनस्येयममोघा वृत्तिरुच्यते ॥

नमः श्रीवर्धमानाय प्रबुद्धाशेषवस्तवे ।
येन शब्दार्थसम्बन्धास्सर्वेण सुनिरूपिताः ॥

शब्दो वाचकः अर्थो वाच्यः तयोस्सम्बन्धो योग्यता अथ वा शब्द आगमः अर्थः प्रयोजनमभ्युदयो निश्रेयसं च तयोस्सम्बन्ध उपायोपेयभावः ते येन सर्वसत्त्वहितेन सता तत्त्वतः प्रतिज्ञापिताः तस्मै परमार्ह-

न्त्यमहिम्ना विराजमानाय भगवते वर्धमानाय षडपि द्रव्याणि अशेषाणि अनन्तपर्यायरूपाणि साकल्येन साक्षात्कुर्वते नमस्कुर्वे इत्युपस्कारः एवं कृतमङ्गलरक्षाविधानं परिपूर्णमल्पग्रन्थं लघूपायं शब्दानुशासनं शास्त्रमिदं महाश्रमणसङ्घाधिपतिर्भगवानाचार्यशाकटायनः प्रारभते शब्दार्थज्ञानपूर्वकं च सन्मार्गानुष्ठानम् ॥ अ इ उ ण् । . . . . .

* * * *

Colophon :—इति श्रुतकेवलिदेशीयाचार्यशाकटायनकृतौ शब्दानुशासने वृत्तौ प्रथमस्याध्यायस्य प्रथमः पादः ॥

* * * *

इति श्रुतके . . . . द्वितीयः पादः ॥

* * * *

इति श्रुत . . . . तृतीयः पादः ॥

* * * *

इति श्रुत . . . . चतुर्थः पादः ॥

* * * *

इति श्रुतकेवलिदेशीयाचार्यशाकटायनस्य महाश्रमणसङ्घाधिपतेः कृतौ शब्दानुशासने वृत्तौ द्वितीयस्याध्यायस्य प्रथमः पादः ॥

* * * *

इति श्रुतकेवलिदेशीयाचार्यशाकटायनकृतौ शब्दानुशासने वृत्तौ द्वितीयस्याध्यायस्य द्वितीयः पादः ॥

* * * *

इति श्रुत . . . . तृतीयः पादः ॥

* * * *

इति श्रुत . . . . चतुर्थः पादः ॥

8. काशिकाव्याख्या(पदमञ्जरी).

Beginning :

व्यक्तप्रधानपुरुषात्मकमस्वतन्त्रमेतत्समस्तमधितिष्ठति यः स्वतन्त्रः ।
तस्मै शिवाय परमाय दशाव्ययाय साम्बाय सादरमयं विहितः प्रणामः ॥
स्वं स्वं मनोरथमवाप्तुमपेतविघ्नं यस्य प्रसादमनवाप्य न शक्नुवन्ति ।
पद्मासनप्रभृतयः प्रथमेऽपि देवास्तद्वस्तु हस्तिमुखमस्तु मयि प्रसन्नम् ॥

तातं (रुद्र)पद्मकुमाराख्यं प्रणम्याम्बां श्रियं तथा ।
ज्येष्ठं चाग्निकुमाराख्यमाचार्यमपराजितम् ॥

यश्चिराय हरदत्तसंज्ञया विश्रुतो दशसु दिक्षु दक्षिणः ।
उज्जहार पदमञ्जरीमसौ शब्दशास्त्रसहकारपादपात् ॥

तामिमामनुपथेन चेतसा भावयन्तु भुवि भव्यबुद्धयः ।
कः खलु प्रणयिनि प्रियंवदे मत्सरी भवति मद्विधे जने ।

अविचारितरमणीयं कामं व्याख्याशतं भवतु वृत्तेः ।
हृदयंगमा भविष्यति गुणगृह्याणामियं व्याख्या ॥

इष्टदेवनमस्कारः कार्यः सन्नेह किं कृतः ।
वृत्तौ सूत्रे तथा भाष्ये वार्तिके च तदुच्यते ॥

मनसा वचसा च कर्मणा कृत एवायमिहानिवेशितः ।
न हि दर्भपवित्रपाणितादयपरं मङ्गलमत्र कीर्त्यते ॥

वृत्त्यन्तरेष्वसन्तं गुणं वदन् वृत्तिकृन्निजे ग्रन्थे प्रेक्षावतां प्रवृत्त्यै क्रियमाणं वस्तु निर्दिशति ॥ "वृत्तौ भाष्य इति" ॥ वस्तुनि निर्दिष्टे सति तेनार्थे नार्थिनः प्रवर्तन्ते इतरे नेत्युपयुक्तो ग्रन्थादौ वस्तुनिर्देशः । वृत्त्यन्तरेष्वसम्भाविनो गुणस्य कथनं तु प्रवृत्तिनियमार्थं कथमपरया प्रवृत्तीर्विहाय वृत्त्यन्तराण्यस्याम् । स पुनर्गुणो वृत्त्यादिषु विप्रकीर्णस्यांशः तत्सारभूतोंऽशस्तत्संग्रहात्मकत्वम् । तत्र सूत्रार्थप्रधानो ग्रन्थो वृत्तिः ।

साचेह पाणिनिप्रणीतानां सूत्राणां कुणिप्रभृतिभिराचार्यैर्विरचितं विवरणम्। आक्षेपसमाधानपरो ग्रन्थो भाष्यम्। तदिह कात्यायनप्रणीतानां वाक्यानां पतञ्जलिप्रणीतं विवरणम्। तथाशब्दः समुच्चये। पारायणशब्दः प्रत्येकमभिसम्बध्यते धातुपारायणं नामपारायणमिति। यत्र धातुप्रक्रिया तद्धातुपारायणम्। यत्र गणशब्दानां निर्वचनं तन्नामपारायणम्। आदिशब्देन शिक्षोणादिफिषादेर्ग्रहणम्। 'विप्रकीर्णस्य विक्षिप्तस्य तन्त्रस्य तन्त्रं प्रधाने सिद्धान्ते तन्तुवाये परिच्छदे' इति निघण्टुः। इह तु सिद्धान्तवचनः तत्रापि व्याकरणशास्त्रे वर्तते वृत्त्यादिसमभिव्याहारात् तस्य यः सार उत्कृष्टोऽशस्तस्य संग्रहः क्रियते संगृह्यत इत्यर्थः। तत्प्रकारं दर्शयति "इष्ट्युपसंख्यानवती" ति सूत्रेणासंगृहीतं लक्ष्यं येन संगृह्यते तदुपलक्षणमिष्ट्युपसंख्यानग्रहणम्। तेन वक्तव्यादीनामपि ग्रहणम्। वृत्त्यन्तरेषु सूत्राण्येव व्याख्यायन्ते इयं पुनरिष्ट्यादिमती तथा शुद्धगुणा वक्ष्यति। 'लोहितादिडाज्भ्यः क्यष्वचनम् भृशादिष्वितराणी' ति कण्वाच्च शकलः पूर्वः कतादुत्तर इष्यत इति चसैषा गणस्य शुद्धिः। वृत्त्यन्तरेषु तु गणपाठ एव नास्ति प्रागेव शुद्धिः णेरणावित्यादौ गूढः सूत्रार्थो विवृतो यथा सा विवृतगूढसूत्रार्था गूढग्रहणं सूत्रार्थमात्रोपलक्षणं, सूत्रार्थप्रधानेत्यर्थः। अनेन वृत्तिलक्षणमुक्तम् व्युत्पन्नानां शब्दरूपाणां सिद्धिर्यस्यां सा व्युत्पन्नरूपसिद्धिः उदाहरणमण्डितेत्यर्थः। यदि वोदाहृतशब्दरूपं यथा सिद्ध्यति तथा व्युत्पत्तिः क्रियते यस्यां सा व्युत्पन्नरूपसिद्धिः। दुर्निरूपेषु पदेषु क्वचित् प्रक्रियाऽभिधीयत इत्यर्थः वृत्तिरिति ग्रन्थाभिधानम्। काशिकेति देशतोऽभिधानम्। काशिषु भवा "काश्यादिभ्यष्ठञ्ञिठौ" काशिका॥ यथा पुनरयमंशः सारभूतस्तथा दर्शयति। "व्याकरणस्ये ति" एतावदेव शास्त्रशरीरं यदिष्ट्युपसंख्यानादि, एतावति हि शास्त्रकृत्यं परिनिनिष्ठति परिसमाप्यते। अतएव तु शास्त्रशरीरस्य परिकरबन्धो रक्षाबन्धः परिशिष्टोऽशो ग्रन्थकारेण भाष्यकारादिना क्रियते

आक्षेपसमाधानादिमुखेनायमेवांश उपस्थाप्यत इत्यर्थः । अत्र च व्याकरणविषया वृत्तिः क्रियत इति वचनात्तस्य यत्प्रयोजनं तदेवास्या अपीति अर्थादुक्तं भवति । अथ व्याकरणस्यैव किं प्रयोजनं, किमनेन दृष्टेन सर्वथाध्येयं व्याकरणं, श्रूयते हि 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेय' इति सन्ध्योपासनादिवदवश्यं कर्तव्यं व्याकरणाध्ययनमित्युक्तं भवति तत्र यथाऽनुपासीनः सन्ध्यां प्रत्यवैति तथाऽनधीयानोऽपि व्याकरणं, तत्र व्याकरणं ज्यौतिषं निरुक्तं शिक्षा छन्दोविचितिकल्पसूत्राण्यङ्गानि, अङ्गत्वञ्चाङ्गसंस्तवात् ।

मुखं व्याकरणं तस्य ज्यौतिषं नेत्रमुच्यते ।<br>
निरुक्तं श्रोत्रमुद्दिष्टं छन्दसां विचितिः पदे ॥<br>
शिक्षा घ्राणं तु वेदस्य हस्तौ कल्पान् प्रचक्षते ।

इति । उपकारकत्वाच्च तत्र व्याकरणमर्थविशेषमाश्रित्य पदमन्वाचक्षाणं पदपदार्थप्रतिपादनेन वेदस्योपकरोति । ज्यौतिषमप्यध्ययनोपयोगिनमनुष्ठानोपयोगिनश्च कालविशेषं प्रतिपादयति, निरुक्तं तु व्याकरणस्यैव कात्स्न्यं । छन्दोविचितिरपि 'गायत्र्या यजति' 'त्रिष्टुभा शंसती' त्यादौ श्रुतानां गायत्र्यादिशब्दानां लक्षणतोऽर्थमाचष्टे । शिक्षाप्यध्ययनकाले कर्मणि च मन्त्राणामुच्चारणप्रकारं प्रतिपादयति । कल्पसूत्राण्यपिप्रतिशाखं शाखान्तराधीतेन न्यायप्राप्तेन चाङ्गेनोपेतस्य कर्मणः प्रयोगं कल्पयन्ति । षट्सु चाङ्गेषु व्याकरणं प्रधानं पदपदार्थज्ञानस्य तदायत्तत्वात् । वृत्तिकारस्तु प्रयोजनप्रवणत्वात्प्रेक्षावत्प्रवृत्तेः संभवाच्च प्रयोजनस्य भाष्यकारेण पठितं साक्षात्प्रयोजनमाह । 'अथेति' । अथेत्ययं शब्दोऽधिकारार्थः अधिकारः प्रस्तावप्रारम्भः, तमथशब्दो द्योतयति शब्दानुशासनमित्येतावत्युच्यमाने सन्देहः स्यात् किं शब्दानुशासनं प्रारभ्यते उत श्रूयत इति, अथशब्दे तु सति क्रियान्तरव्यवच्छेदेन प्रस्तूयत इत्यषोऽर्थो निश्चीयते । विविक्ताः साधवः शब्दाः प्रकृत्यादिविभागतो

ज्ञाप्यन्ते येन तच्छास्त्रमत्र शब्दानुशासनम्, अनुपूर्वो हि शासिर्विविच्य ज्ञापने दृष्टः तद्यथा 'अक्षेत्रवित् क्षेत्रविदं ह्यप्राट् स प्रैति क्षेत्रविदानुशिष्ट इति' 'संपूषन् विदुषा नय यो अञ्जसानुशासती' ति च ततः करणे ल्युट्, शब्दानामनुशासनं शब्दानुशासनमिति कर्मणि षष्ठ्या समासः अत्र च शब्दानामिदमनुशासनं नार्थानामिति अर्थव्यावृत्तिपरायां चोदनायां कर्तृविशेषस्याविवक्षितत्वादुभयप्राप्त्यभावान्नो 'भयप्राप्तौ कर्मणी' त्यनेन षष्ठी किं तर्हि 'कर्तृकर्मणोः कृती' त्यनेनेति 'कर्मणि चे' ति न निषिद्धः समासः।

अनिदंप्रथमाः शब्दाः साधवः परिकीर्तिताः।
त एव शक्तिवैकल्यप्रमादालसतादिभिः॥
अन्यथोच्चरिताः पुंभिरपशब्दा इतीरिताः।
स्मारयन्तश्च ते साधूनर्थधीहेतवः स्मृताः॥

यद्यपि लोके गवादयो गाव्यादयश्च सममेव प्रयुज्यन्ते वाचकत्वाभिमानोऽपि सम एव तेषु लौकिकानां साधीयान् गाव्यादिषु,

तथापि गवादयोऽनादयः साधवः त एव साक्षाद्वाचकाः। गाव्यादयस्तु बालादिभिरशक्त्यादिना गवाद्युच्चारणेच्छयैव तथा तथोच्चार्यन्ते आदिमन्तोऽपभ्रंशाः ते च स्वयमवाचका अपि प्रथमं गवादिशब्दस्मरणद्वारेणार्थधियं जनयन्ति, ये च यत्रैव प्रथमे व्यवहारे व्युत्पाद्यन्ते तेषां गवादिवत्तेष्वेव वाचकत्वाभिमानः। एवं तन्मूलानामपि। तत्र ये साधवः ते शास्त्रेणानुशिष्यन्तेऽसाधुभ्यो विविक्ताः प्रकृतिप्रत्ययविभागेन ज्ञाप्यन्ते इमे साधव इति, कथं पुनरिदमाचार्येण पाणिनिनावगतमेते साधव इति, आपिशलेन पूर्वव्याकरणेन, आपिशलिना तर्हि केनावगतं, ततः पूर्वेण व्याकरणेन, यद्ययमन्धपरम्पराप्रसङ्गः, तद्यथा शुक्लं क्षीरमित्यन्धेनोक्ते केनेदमवगतमिति पृष्टो यदान्धान्तरं मूलं निर्दिशति सोप्यन्धान्तरं तदा नैतद्वचः शौक्ल्ये प्रमाणं भवति तादृगेतत्। नैष दोषः।

सर्वे एव हि ते स्वे स्वे काले गाव्यादिभ्यो विविक्तान् गवादिशब्दान् प्रत्यक्षत एवोपलभन्ते चत्वारो वेदाः ऋग्यजुस्सामाथर्वणलक्षणाः, तत्र ऋग्वेद एकविंशतिधा भिन्नः, एकशतं यजुश्शाखाः, सहस्रवर्त्मा सामवेदः, नवधाथर्वणो वेदः, षडङ्गानि, मीमांसा न्यायविस्तरः, अष्टादश पुराणानि, अनन्तान्युपपुराणानि, अष्टादश स्मृतयः अनन्ता उपस्मृतयः, भारतरामायणादिरितिहासः, आयुर्वेदो धनुर्वेदो गान्धर्वोऽर्थशास्त्रं काव्यानि नाटकानि एतावान् प्रयोगस्य विषयः तद्यस्यात्र सर्वत्र निष्ठा स तावत्सर्वानेव व्याकरणानुगताञ्छब्दान् प्रत्यक्षयति व्याकरणेन च पूर्वस्मिन्नपि काले तेषां सत्तामनुसन्धत्ते, एषा अस्मदादीनां गतिः। पाणिनिरपि स्वकाले शब्दान् प्रत्यक्षयन्नापिशलादिना पूर्वस्मिन्नपि काले सत्तामनुसन्धत्ते, एवमापिशलिः, अनादिरयं संसारः कथं पुनरस्मदादीनां सर्वलक्ष्यदर्शित्वं, मा भूदस्मदादीनामस्मद्विशिष्टानां महर्षीणां सम्भवति यस्य वा ईश्वरानुग्रहः स सर्वं प्रत्यक्षयति। अत्रैव हि लौकिकाः स्मरन्ति।

येनाक्षरसमाम्नायमधिगम्य महेश्वरात्।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः॥

इति। अक्षरसमाम्नायं च व्याचक्षते देवसूत्राणीति।

अथ वा कस्यचित् केचिदपरस्यां परे तथा।
अन्यस्यान्ये तथा शब्दाः सन्ति दर्शनगोचराः॥

तथा च। यद्विस्मृतमदृष्टं वा सूत्रकारेण तत् स्फुटम्।
वाक्यकारो ब्रवीत्येव तेनादृष्टं च भाष्यकृत॥

अत एव च पाणिनीयमेतत्त्रिमुनिव्याकरणं वदन्ति सन्तः

* * * *

यथैव वेदवाक्यानां पाठे सत्यपि सङ्करे।
बहूनामभियुक्तानामुपदेशेन निर्णयः॥

आह ॥ अनादिता चेत्साधुत्वं संज्ञाशब्देषु का गतिः ।
उच्यते नामकरणे गृह्येषु नियमश्रुतेः ॥
यथाकामं न संज्ञानां विनियोगः समस्ति नः ।
तस्मादनादिता संज्ञास्वपि नैव विरुध्यते ॥
यास्तत्तद्देशभषाभिः संज्ञास्तासां न साधुता ।
ऌकारवार्तिके चैतद्युक्तं कात्यायनोऽब्रवीत् ॥

* * * *

कूचिमब्वीत्यादयो न तासां साधुत्वं, तदेतत् ऌकारोपदेशस्य प्रयोजननिराकरणावसरे वार्तिककारेणाप्युक्तं 'न्याय्यभावात्कल्पनं संज्ञादिष्वि' ति, यदृच्छया कश्चित् ऌतको नाम तस्मै दद्दचूतकाय देहीति अच्कार्यं यथा स्यादिति ऌकार उपदिश्यते । तत्र न्याय्यभावात् न्याय्य ऋतकशब्दः स हि कृदन्तः ऋतीयतेः क्कुनि ऋतक इति, ततश्च तस्यैव संज्ञात्वेन कल्पनं युक्तं स एव संज्ञात्वेन कल्पयितव्य इत्यर्थः

* * * *

यास्त्वेताः स्वेच्छया संज्ञाः क्रियन्ते डित्थभादयः ।
कथं नु तासां साधुत्वं नैव ताः साधवो मताः ॥
अनपभ्रंशरूपत्वान्नाप्यासामपशब्दता ।
हस्तचेष्टा यथा लोके यथा सङ्केतिता इमाः ॥
ततश्च । नासां प्रयोगोऽभ्युदयः प्रत्यवायोऽपि वा भवेत् ।
लाघवेनार्थबोधार्थं प्रयुज्यन्ते तु केवलम् ॥

* * * *

अनपभ्रष्टतानादिर्यद्वाभ्युदययोग्यता ।
व्याक्रिया व्यञ्जनीया वा जातिः कापीह साधुता ॥

* * * *

यश्च व्याकुरुते वाचं यश्च मिमांसतेऽध्वरम् ।
तावुभौ पुण्यकर्माणौ पङ्क्तिपावनपावनौ ॥

इति ॥ शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥

इति च, तथा ॥ निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥

*     *     *     *

'यदधीतमविज्ञातं निगदेनैव शब्द्यते ।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हि चित्' ॥

*     *     *     *

ननु चार्थाभिधानाय प्रयोगः शब्दगोचरः ।
प्राप्त इत्यविधेयस्स्यात् क्षुधितस्येव भोजनम् ॥

उच्यते । अर्थप्रयुक्ते शब्दानां प्रयोगे समुपस्थिते ।
धर्माय नियमः शास्त्रे प्राङ्मुखत्वादिवद्भवेत् ॥

*     *     *     *

'यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान्यथावद्व्यवहारकाले ।
सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद्दुष्यति चापशब्दैः' ॥

इति । कात्यायनप्रणीतेषु भ्राजाख्येषु श्लोकेषु मध्ये पठितोऽयं श्लोकः ।

तथा साधुष्वपि सामान्यलक्षणान्विताद्विशेषलक्षणान्वितस्य प्रयोगे फलविशेषः स्मर्यते ।

नाकमिष्टसुखं यान्ति सुयुक्तैर्बडबारथैः ।
अथ पत्कापिणो यान्ति येऽचीकमत भाषिणः ॥

इति । अयमर्थः । कमे 'रायादय आर्द्धधातुकेवे' ति णिङभावपक्षे लुङि 'कमेरुपसङ्ख्यान' मिति चङो विशेषलक्षणं, णिङ्भावपक्षे तु णिश्रिद्रुस्रुभ्य इति सामान्यलक्षणं, तत्र ये विशेषलक्षणस्य स्मरन्तोऽचकमतेति प्रयुञ्जते ते सुयुक्तैर्बडबारथैरिष्टसुखं नाकं स्वर्गं यान्ति

ये तु सामान्यलक्षणवशेनाचीकमतेति भाषन्ते ते पादौ कर्षन्तः स्वर्गं यान्तीति, चङ्विधौ भाष्यकारेण पठितोऽयं श्लोकः। तदेवं साधून् प्रयुञ्जानस्याभ्युदयो भवतीति नियमार्थः।

---

## 9. आख्यातचन्द्रिका.

Beginning:

भूवार्यादिप्रकृतये पुरुषत्रयमूर्तये।
सदाख्यातपदायास्मै परस्मायात्मने नमः॥
सम्पूज्य गुरुपादाब्जे भट्टमल्लेन रच्यते।
व्युत्पित्सूनां प्रचारार्थमेकार्थाख्यातपद्धतिः॥
सत्तायामस्ति भवति विद्यते चाथ जन्मनि।
उत्पद्यते जायते च प्ररोहत्युद्भवत्यपि॥
निर्वर्तते सम्भवति सिद्धौ सिध्यति राध्यति।
निष्पद्यते च राध्नोति साध्नोति फलतीति षट्॥
वर्तते तु वसत्यास्ते ध्रियते चावतिष्ठते।
क्षीयते स्थलति स्थित्यां मठत्यपि च तिष्ठति॥
जीवे बलत्यूर्जयति श्वसित्यनिति जीवति।
अन्यतेऽथ प्राणिति च समनित्युदनित्यपि॥
व्यनित्यपानितिं प्राणवृत्तिष्वाख्यातपञ्चकम्।
कृच्छ्रजीवे क्षञ्जयति कठत्यातङ्कतित्रयम्॥
परिणामे परिणमत्यात्मनेऽपि विवर्तते।
सम्पद्यते कल्पतेऽथ वृद्धौ बृंहति वर्धते॥
. . . . . . . . इति भावविकारवर्गः.

स्फूर्तौ सत्ताविरस्त्याविर्भवति प्रादुरस्ति च ।
प्रादुर्भवति निर्भाति स्फुरति प्रतिभासते ॥
वेत्ति जानाति जानीते वेद बोधति बुध्यते ।
निबोधते चेतयते मन्यते प्रतिपद्यते ॥
प्रेक्षते पण्डते प्रत्येत्यवगच्छति चेतति ।
मनुते चोपलभतेऽवैति वेदयतेऽश्वति ॥
ज्ञाने गारयते संवेत्त्यात्मनेऽयमकर्मकः ।
गृह्णात्यपि च गृह्णीते चिकेति च निकेति च ॥
एतौ छन्दसि केषां चिद्दानार्थास्सप्तविंशतिः ।

. . . . . . . . इति बुद्धिवर्गः.

लषते लष्यति लषत्याशास्ते माङ्क्षतीप्सति ।
आकाङ्क्षति स्पृहयति नाथते वष्टि वाञ्छति ॥
आशंसते कामयते लष्यते काङ्क्षतीच्छति ।
लिप्सते हर्यतीच्छायां (वल) सहत्यप्यनुरुध्यते ॥
विंशतिस्स्युर्भ्रूणयते त्वपि लुभ्यति गृध्यति ।
कङ्क्षते गर्धयति च गार्ध्ये षट् स्युर्धनायति ॥

. . . . . . . इत्यन्तःकरणवर्गः.

आचष्टे वक्ति वदति लपत्याख्याति भाषते ।
ब्रूतेऽभिधत्ते गदति व्याहरत्यपि जल्पति ॥
ब्रवीत्यभिदधाति व्याहरते कथयत्यपि ।
गृणात्युदीरयत्युक्तौ कीर्तयत्यालपत्यपि ॥
भणत्यपि वचत्येके वाचयत्यपि शंसति ।
पठत्यधीतेऽध्ययने चर्चयत्यपि चर्चति ॥

आमनन्त्युपयुङ्क्ते च गमयत्यपि शिक्षते ।

. . . . . . . इति वचनक्रियावर्गः.

ह्रादते नर्दति नदत्यपि गर्जति गुञ्जति ।
कूजति क्ष्वीजति गजत्यपि गृञ्जति गर्जति ॥

रेभते गञ्जति रणत्येवं व्रणति गुञ्जति ।
अम्बते रम्बते वेटत्यणति क्षणतीति च ॥

शब्दायते कणति च रौति भ्रणति रासति ।
वणति द्रुणति हापयति स्वनति रासते ॥

कलते कौति वनति ध्वनयत्यपि मोजति ।
कवते क्रोशति रसत्यपि ह्लसति रायति ॥

गवते घोषति रवीत्यपि स्यमति कायति ।
रवते धवते क्रूपत्येटते ध्वनतीति च ॥

नावते शचते गाजयत्येते शब्दवाचिनः ।

. . . . . . . इति ध्वनिक्रियावर्गः

अत्र भावविकाराणां धियामिच्छादिकर्मणाम् ।
वाचां तत्सङ्गतानां च पर्यायाः प्राय ईरिताः ॥

इत्याख्यातचन्द्रिकायां प्रथमः काण्डः ॥

अथोच्यते नृविप्रादिचेष्टावर्गैस्समासतः ।
प्रसङ्गसङ्गताश्चान्याः पर्यायैस्तिङ्पदात्मकैः ॥

प्रक्रम्यते प्रारभते प्रतीत्युद्धातयत्यपि ।
प्रस्तुते चोपक्रमते दशोपक्रम्यतेप्यमी ॥
अभ्यादत्ते प्रक्रमत उपजानात्युपक्रमे ॥ . . .

इति मनुष्यचेष्टावर्गः ॥

प्रक्षालयति पल्पूलयति शोधयतीत्यमी ।
निर्णेनेक्ति पुनातीति धावत्यप्यात्मने त्रयः ॥
निङ्क्ते मार्ष्टि च शौचे स्युर्मार्जयत्यपि मार्जति ।
मज्जत्याझवते स्नाति स्नायत्येकेऽवगाहते ॥
स्युर्मज्जने बुडत्येते शुन्धयत्यपि शुन्धति ।
शुद्ध्यते शुन्धयति शुचो भावे स्युरवदायति ॥

. . . . . . . इति ब्रह्मक्रियावर्गः.

ऐश्वर्ये इन्दति सुरत्यपि रज्यति पत्यते ।
तप्यते तपतीत्येके क्षिपतीष्टे च सौति च ॥

. . . . . . . . इति क्षत्रियचेष्टावर्गः.

कृपते कृपतीत्येते कृषौ खुरति कर्षति ।
रदत्येवं विलिखते हलति स्युः खलत्यपि ॥

. . . . . . . इति वैश्यचेष्टावर्गः ॥

वयते वयति व्यूतौ ऊयतेऽथ विषीव्यति ।
तथा निषीव्यति स्यूतौ परिषीव्यति सीव्यति ॥

. . . . . . . इति शूद्रचेष्टावर्गः.

प्रकीर्णकसनाद्यन्तनानार्थान्यात्मनेपदे ।
तदन्यस्मिन्विभागाश्च संगृह्यन्तेऽत्र सर्वशः ॥

इति द्वितीयः काण्डः.

यानि पूर्वमसङ्गत्या नैवाख्यातान्यचक्षत ।
वक्ष्यन्ते तानि वर्गेऽस्मिन् प्रकीर्णाख्ये यथास्मृति ॥
विभाति व्युच्छते व्युष्टे प्रभाति विविशत्यपि ।
श्विन्दते श्वेतते त्रीणि स्युः शुक्लत्वेऽवदायति ॥

. . . . . . . . . . इति प्रकीर्णवर्गः.

धातोस्तुमर्थादिच्छायां सनि रूपं बुभूषति ।
चिचिक्षीषत इत्यादि पूर्ववच्चात्मनेपदम् ॥

. . . . . . . . . इति सनादिवर्गः

अथ नानार्थधातूत्थान्याख्यातानीह कानिचित् ।
यथामति प्रदर्श्यन्ते व्यक्तं भूवाद्यनुक्रमात् ॥

गणेऽवधारणात् क्वापि सूत्रे तेन विशेषणात् ।
क्वाप्यर्थान्तरनिर्देशादनेकार्थाभिधानतः ॥

भवतीत्येष सत्तायां प्राप्तिसम्पत्तिजन्मसु ।
आद्योपलम्भे पर्याप्तौ सामर्थ्ये प्रभवत्ययम् ॥

सम्भावनायां माने च साहित्ये सम्भवत्यपि ।
शक्तिव्याप्त्योर्विभवतिं प्राकट्येऽप्युद्भवत्यथ ॥

. . . . . . . . . . इति नानार्थवर्गः.

भावे कर्मणि सर्वस्माद्धातोः स्यादात्मनेपदम् ।
ङितस्तथानुदात्तेभ्यो भूयतेऽप्ययते तु दिक् ॥

इत्यात्मनेपदपरस्मैपदवर्गः.

Colophon:—इति भट्टमल्लविरचितायामाख्यातचन्द्रिकायां परस्मैपदात्मनेपदविभागाः ॥ इत्याख्यातचन्द्रिकासङ्ग्रहस्समाप्तः ॥

---

## 10. अभिधानरत्नमाला.

Beginning:—

शब्दब्रह्म यदेकं यच्चैतन्यं (च) सर्वभूतानाम् ।
यत्परिणामस्त्रिभुवनमखिलमिदं जयति सा वाणी ॥ 1 ॥

इयममरदत्तवररुचिभागुरिवोपालितादिशास्त्रेभ्यः ।
अभिधानरत्नमाला कविकण्ठविभूषणार्थमुद्ध्रियते ॥ 2 ॥

स्वः स्वर्गः सुरसद्म त्रिदशावासः त्रिविष्टपं त्रिदिवम् ।
द्यौर्गौरनुर्ध्वभुवनं नाकः स्यादूर्ध्वलोकश्च ॥ . . . .

तत्रभवान् भगवानिति शब्दो वृद्धैः प्रयुज्यते पूज्ये ।
पादा इति नामान्ते देवो भट्टारको वापि ॥ 155 ॥

इति श्रीमद्भट्टहलायुधकृतायामभिधानरत्नमालायां स्वर्गकाण्डः प्रथमः ।

भूर्भूमिर्वसुधावनिर्वसुमती धात्री धरित्री धरा ॥
गौर्गोत्रा जगती रसा क्षितिरिला क्षोणी क्षमा क्ष्माचला ।
कुःपृथ्वी पृथिवी स्थिरा च धरणिर्विश्वम्भरा मेदिनी ।
ज्यानन्ता विपुला समुद्रवसना सर्वंसहोर्वी मही ॥ 1 ॥ . . .

उशीरं वीरणीमूलं श्रीवेरं वालुकं जलम् ।
मुस्तकः कुरुविन्दः स्याद्गुन्द्रा च जलदाह्वयः ॥ 470 ॥

भौमकाण्डो द्वितीयः.

वडवामुखं च पातालं वैरोचननिकेतनं ।
तथाधोभुवनं प्रोक्तं नागलोको रसातलम् ॥ 1 ॥

निम्नागाधोगर्तः श्वभ्रं सुषिरं वपा बिलं विवरं ।
अन्तरमवटाच्छिद्रं निर्व्यथनं रन्ध्ररोककुहरधराः ॥ 2 ॥ . . .

उद्घाटनं घटीयन्त्रं पादावर्तोऽरघट्टकः ।
पानन्तु सरणिः प्रोक्ता प्रणाली जलपद्धतिः ॥ 65 ॥

इति पातालकाण्डस्तृतीयः.

निकरनिकायनिवहाविसरव्रजपूगसञ्चयाः ।
समुदयसार्थयूथनिकुरुम्बकदम्बकपूगराशयः ॥ 1 ॥ . . .

परभागो गुणोत्कर्षः स्पर्धा सङ्घर्ष उच्यते ।
आयामः स्मृत आनाहः परिणाहो विशालता ॥ 102 ॥

इति सामान्यकाण्डश्चतुर्थः॥

एकार्थो बहुभिः शब्दैः कथितः कथ्यतेऽधुना ।
एकस्यैव तु शब्दस्य बहुष्वर्थेषु वर्तनम् ॥ 1 ॥

रुद्रेऽपिं खण्डपरशुर्वैश्रवणेऽप्येककुण्डलः प्रोक्तः ।
द्वारेऽपि प्रतिहारः प्राकाराग्रेषु कपिशीर्षम् ॥ 2 ॥ . . .

अथानन्तरकल्याणसंप्रश्नादिषु कथ्यते ।
अथो इति तथा प्रोक्तो नामाभ्युपगमादिषु ॥ 100 ॥

सदा सना च नित्यार्थे स्वस्ति स्यान्मङ्गलादिषु ।
इतिशब्दः स्मृतो हेतौ प्रकारादिसमाप्तिषु ॥ 101 ॥

Colophon :—इति श्रीमद्धलायुधभट्टकृतायां अभिधानरत्नमालायां अनेकार्थकाण्डः पञ्चमः.

---

11. अमरकोशव्याख्यानम् (टीकासर्वस्वम्)

Beginning :—

बर्हिणबर्हापीडः सुषिरपरो बालवल्लभो गोष्ठे ।
मेदुरमुदिरश्यामलरुचिरव्यादेष गोविन्दः ॥

मुदेऽसौ धीराणां न गुणलवगर्वान्मिमम परि-
श्रमः किञ्च स्वार्थस्तदिह विबुधाः क्षन्तुमुचितम् ।

इतो ये सासूया अनृजुमतयो नूतनतया ।
खलास्तेऽमी हेया गुणिषु पुनरप्यञ्जलिरयम् ॥

अथ ॥ टीकासर्वस्वं दशटीकावित् करोत्यमरकोशे ।
श्रीमत्सर्वानन्दो वन्द्यघटीयार्तिहरपुत्रः ॥

* * * *

यद्यपि सन्त्यतिगुणिनः श्रमरास्तथाप्यत्र हि मम मौखर्य्यात् ।
ललितं रौति पिकश्चेत् वाग्यामं यान्ति किं काकाः ॥

तत्रादौ भगवतः सेवायां परोपदेशे प्रारिप्सितप्रत्यूहशमनाय धर्ममार्जयन्नाह.

यस्येत्यादि । हे धीराः स सेव्यतामित्यनेनैव धैर्य्यशालिन एव सेवितुं शक्नुवन्तीति तान् संबोधयति ।

Colophon :— इति श्रीवन्द्यघट्टीयश्रीसर्वानन्दकृतौ. टीकासर्वस्वे स्वर्गवर्गः.

* * * *

इतिश्रीसर्वानन्दकृतौ टीकासर्वस्वे पातालवर्गः । काण्डश्च प्रथमः. ।

* *

| | | |
|---|---|---|
| इति श्री वन्दिघट्टीय | * | भूवर्गः, |
| इति वन्द्यघट्टीय | * | पुरवर्गः, |
| इति वन्द्यघट्टीय | * | शैलवर्गः. |
| इति-वन्द्यघट्टि | * | वनौषधिवर्गः. |

The following passages are found in the complete copy of the work already existing in the Library.

इति स्त्रीत्वानुशासनम् । अरुणान्येति अन्यबोद्धव्यम् । नामानुशासनं यथा निलिम्पाद्युपदो देवा इत्यादि गङ्गाधरादीनां ।

त्रीणि व्याकरणान्यधीत्य सकलं साहित्यमालोक्य च
प्रज्ञाव्यापकभाषितानि हृदये न्यस्याकृतेदं सह ।
प्राज्ञेनानु सनातनेन बहुशः प्रत्यक्षरं शोधितं
जिज्ञासाथ विशब्दवर्त्मनि तदाचैतत् समालोच्यताम् ॥

इति वन्दिघटीय श्रीसर्वानन्दकृतौ टीकसर्वस्वत्रिलिङ्गादिसङ्ग्रहवर्गः। संपूर्णश्च टीकासर्वस्वम्

## 12. अमरकोशव्याख्यानम् (लिङ्गाभट्टीयम्).

(तृतीयकाण्डः अव्ययवर्गान्तः लिङ्गादिसङ्ग्रहवर्गे किञ्चित्).

Beginning :—

सर्वज्ञं सर्वगतं भजत सदा शैलजार्धसङ्कीर्णम् ।
नानार्थप्रथम . . . प्रकाशितस्फूर्तिम् ॥

एवं काण्डद्वयेन नियतार्थनामानि अनुशिष्य प्रेक्षावत्प्रवृत्तिसिद्धये वक्ष्यमाणं सङ्गृह्य दर्शयति विशेष्यनिघ्नैरिति . . . .

* * * *

बोम्मकट्टचप्पयार्येण नामलिङ्गानुशासने ।
विशेष्यनिघ्नवर्गस्य संक्षिप्य व्याकृतिः कृता ॥

* * * *

बोम्मनकण्व्यप्पयाचार्यः पदवाक्यप्रमाणवित् ॥
सङ्कीर्णवर्गं व्याचष्ट नामलिङ्गानुशासने ॥

इह यच्यक्तमज्ञानादालस्याद्यदुदीरितम् ।
प्रमादादन्यथोक्तं यद्विद्वद्भिः शोद्ध्यतां (बुधैः) ।
श्लोकाः सङ्कीर्णगाः सार्धद्विचत्वारिंशदीरिताः ।

* * * *

Colophon :—इति श्रीवङ्गललिङ्गयसूरिविरचितायां अमरकोशपदविवृतौ अव्ययनानार्थवर्गविवेचनम् ॥

* * * *

इति श्री वङ्गललिङ्गय्यसूरिविरचितायाममरकोशपदविवृतौ अव्ययवर्गविवेचनम् ।

अथ लिङ्गसङ्ग्रहवर्गमुपक्रमते . . . .

End:

अश्वस्तुरगः गो . . . हिङ्गलो रागद्रव्यं वेतालो भूताविष्टशवः मल्लो बाहुयोद्धा भटल्लः काण्डभेदः पुरोडाशः पिष्टकृतहोमद्रव्यं पट्टिसः आयुधभेदः . . . . . .

---

### 13. त्रिकाण्डशेषः (तृतीयकाण्डः).

Beginning:

क्षेमङ्करोऽरिष्टतातिः स्याद्भद्रङ्करशङ्करौ ।
आमुष्यायणविज्ञातौ पुत्रान्नादः कुटीचकः ॥ 1 ॥
स्थपुटं विषमं सञ्चारजीविशरणार्पकः ।
अभिपन्नः शरणार्थी पाण्डुपृष्टस्त्वलक्षणः ॥ 2 ॥
उद्भटोड्डामरोत्तालमाविष्टः प्रेतवापितः ।
प्रेङ्खोलितस्तरलितः तृषितस्तार्षितः सतृट् ॥ 3 ॥
ऊर्ध्वस्थोर्ध्वन्दमौ तुल्यौ ग्राम्यो ग्रामेयकः स्मृतः ।
पराचीनं प्रतीपं स्यात् समीचीनं समञ्जसम् ॥ 4 ॥
स्वस्थानस्थः परान्द्वेष्टि यस्सगोष्ठस्स उच्यते ।
दाता तु दारुर्मुचिरः स्याद्विदग्धस्तु नागरः ॥ 5 ॥
. . . . . . . इति विशेष्यनिघ्नवर्गः.
विधिर्विधानं कर्मास्त्री क्रिया कृत्या विधा कृतिः । . . .
अवसानं तु विरामो मध्यमधो मण्डलं चक्रम् ।
स्यादारम्भः प्रस्तावना तदा मुखमपि ज्ञेयम् ॥

इति सङ्कीर्णकाण्डः.

स्वरकाद्यादिकाद्यन्तवर्गैर्नानार्थसङ्ग्रहम् ।
विहायामरकोशोक्तमकार्षीत् पुरुषोत्तमः ॥

शक्रार्कपर्णयोश्चार्कोऽभीकस्त्वभयकामिनोः ।
रूपकान्तिकयोश्चाङ्कोऽलिमकौ काककोकिलौ ॥
अन्तिकं निकटं चुल्लिर्नाव्योंकचा चाग्रजान्तिका ।
अनीकोऽस्त्री रणे सैन्ये गौर्यो मातरि, चाम्बिका ॥

* * * * *

End :

कपोतविहगोऽपि स्यात्पृश्न्यां घ प्रसभे हठः । ठान्ताः
प्राण्यङ्गकोशयोरण्डं कूश्माण्डौ फलभिद्गणौ ॥ 10 ॥
कुण्डं खातोत्थयोर्जारिजे ना कुण्डी कमण्डलौ ।
सिंहोक्तौ स्त्री विषे क्ष्वेडः पशौ क्रोडं न नोरसि ॥

---

## 14. नानार्थरत्नमाला.

Beginning :

यत्पादाम्बुरुहच्छाया देवचूडामणीयते ।
यस्य ज्ञानादयोऽनन्ताः स देवः श्रेयसेऽस्तु नः ॥
अस्ति श्रीमन्निरुगपदण्डनाथः प्रचण्डधीः ।
सद्वृत्तौ चैव दण्डेशवंशमुक्तामणिर्गुणी ॥
द्वितीयमन्तःकरणं राज्ञो हरिहरस्य यः ।
राजकार्यं प्रजारक्षां द्वयं धत्ते कुलव्रतम् ॥
भारं हरिहराधीशो भुवः कूर्मादिदुर्वहम् ।
बुद्धौ कुशाग्रसूक्ष्मायां यस्य विन्यस्य मोदते ॥
तिस्रो दधानश्चतुरः पञ्च षट् च यथोचितम् ।
प्रयुञ्जानो नयन्वृद्धिं सप्ताष्टौ यो जिगीषति ॥

विविधग्रन्थसन्दर्भविमर्दविमलीकृतम् ।
यस्य चेतः सरस्वत्या विलासमुकुरायते ॥

सोऽयं ग्रथ्नाति नानार्थरत्नमालां गुणोज्ज्वलाम् ।
श्रीमानिरुगपदण्डेशो नात्यल्पं नातिविस्तरम् ॥

काण्डैश्चतुर्भिरेकद्वित्रिचतुर्वर्णवर्णितैः ।
सङ्कीर्णाव्ययकाण्डाभ्यामिति षड्भिरनुक्रमात् ॥

कथ्यन्ते केऽपि नानार्थशब्दास्तत्रान्तराध्वना ।
अमी सलिङ्गनिर्लिङ्गभेदाद्द्वेधा भवन्ति हि ॥

सलिङ्गाः सप्तधा वृत्या स्त्रियां पुंसि नपुंसके ।
स्त्रीपुंसयोः क्लीबपुंसोः स्त्रीनपुंसकयोस्त्रिषु ॥

शब्दान् पुंसः स्त्रियः क्लीबान् नानालिङ्गत्रिलिङ्गकान् ।
प्रायः क्रमात्प्रवक्ष्यामः कान्तादीन् द्व्यक्षरादिषु ॥

रूपभेदात्साहचार्यात्कण्ठोक्त्या वा विभावयेत् ।
लिङ्गान्यथादि त्वन्तं वा पदं पूर्वेण नान्वयेत् ॥

त्रिष्विति त्रिषु लिङ्गेषु ज्ञेयं द्वन्द्वे द्वयोरिति ।
लिङ्गान्तरनिषेधोऽत्र शेषलिङ्गविधायकः ॥

इति पीठिका ॥

अकारो ब्रह्मविष्ण्वीशकमठेष्वङ्गणे रणे ।
गौरवेऽन्तःपुरे हेतौ भूषणेऽङ्गाद्युमेज्ययोः ॥

* * * *

क्षः संरोधे विरोधे च क्षेमदुःस्वप्नयोश्च ना ।
क्षा स्त्री रमायां निद्रायां क्षं क्लीबे क्षेत्ररक्षसोः ॥

अप्राचुर्यात्प्रयोगस्य लिङ्गं क्वचिदपेक्षितम् ।
एकाक्षरेषु शब्देषु तदूह्यं लक्ष्यवेदिभिः ॥

Colophon:

इति जगदुपकारिण्यामिरुगपदण्डाधिनाथरचितायाम् ।
एकाक्षरकाण्डोऽयं पूर्णो नानार्थरत्नमालायाम् ॥
अर्को मयोनि स्फटिके ज्येष्ठभ्रातरि भास्करे ।
शुभ्रेऽर्कपादपे चाथ मर्को मनसि मारुते ॥

*　　*　　*　　*

End:

अथ त्रिषु पटुस्तीक्ष्णे नीरोगे निपुणेऽपि च ।
तटौ तीरभृगू सृष्टास्त्यक्तनिश्चितनिर्मिताः ॥
इष्टमाशंसिते दत्ते सुहृत्पूजितयोरपि ।
श्लिष्टौ म्लानास्पष्टवाचौ व्यक्तसंकुलयोः स्फुटः ॥
इति टान्ताः ॥

---

## 15. मेदिनीकोशः.

Beginning:—

वृषाङ्काय नमस्तस्मै यस्य मौलिविलम्बिनी ।
जटावेष्टनजां शोभां विभावयति जाह्नवी ॥
पूर्वाचार्यकृतिं वीक्ष्य शब्दशास्त्रं निरूप्य च ।
नानार्थशब्दकोशोऽयं लिङ्गभेदेन कथ्यते ॥
प्रायशो रूपभेदेन विशेषणवशात्क्वचित् ।
स्त्रीपुन्नपुंसकं ज्ञेयं विशेषोक्तेश्च कुत्र चित् ॥
त्रिलिङ्ग्यां त्रिष्विति पदं मिथुने तु द्वयोरिति ।
निषिद्धलिङ्गं शेषार्थं त्वन्ताथादि न पूर्वभाक् ॥
रूपाद्व्यक्तं लिङ्गमुक्तलिपिभ्रान्तिछिदे क्वचित् ।
विशेष्यनिघ्नेऽनुक्तेऽपि विज्ञेया वाच्यलिङ्गता ॥

गुणे शुक्लादिकट्वाद्याः पुंसि स्युस्तद्वति त्रिषु ।
तीक्ष्णाद्यास्तु गुणे क्लीबं गुणिलिङ्गास्तु तद्वति ॥

क्लीबपुंसोरपि स्त्रीत्वं काप्यल्पत्वविवक्षया ।
जातिवाचकशब्दानामपि तु स्त्रीविवक्षया ॥

उद्भिदः प्रसवे क्लीबं हरीतक्यादयः स्त्रियाम् ।
पुष्पे जातिप्रभृतयः स्वलिङ्गा व्रीहयः फले ॥

प्राङ् नानार्था न तल्लिङ्गं द्वयोर्द्वन्द्वे न चैकता ।
शब्दावृत्तिर्न लिङ्गैक्ये सप्तमे न विशेषणे ॥

क्लीबे नपुंसके पुंसि स्त्रियां योषिति च द्वयोः ।
स्त्रीपुंश्चेत्यादि यद्रूपं तल्लिङ्गस्यैव वाचकम् ॥

नानार्थप्रथमान्तोऽत्र सर्वत्रादौ प्रदर्शितः ।
सप्तम्यन्ताभिधेयेषु वर्त्तमानो निवेशितः ॥

एकद्वित्रिचतुःपञ्चषड्वर्णानुक्रमात्कृतः ।
स्वरकाद्यादिकाद्यन्तवर्गैर्नानार्थसङ्ग्रहः ॥

नानार्थकोशपुस्तकभारार्जनदुःखहानये कृ....(पया) ।
मेदिनिकरकृतकोशो विशुद्धलिङ्गोऽभिलिख्यतामेकः ॥

को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे ।
कामग्रन्थौ चक्रिणि च पतत्रिणि च पार्थिवे ॥

मयूरेऽग्निषु पुंसि स्यात्सुखशीर्षजलेषु कम् ।
इति कैकम् . . . . . . . . ॥

* * * *

End :

लक्षणं नाम्नि चिह्ने च सारस्यां लक्षणा क्वचित् ।
लक्ष्मणा त्वोषधीभेदे सारस्यामपि योषिति ॥ . . . . .

रामभ्रातरि पुंसि स्यात् सश्रीके चाभिधेयवत् ।
विषाणी क्षीरकाकोल्याम्भुजशृङ्ग्यां च योषिति ॥

---

## 16. विश्वप्रकाशः

Beginning :

विघ्नेश्वरं विघ्नशान्त्यै वाणीं वाचः प्रवृत्तये ।
गुरून् गूढार्थभानाय प्रणमामि निरन्तरम् ॥

यद्यस्ति वाङ्मयमहार्णवमन्थनेच्छा प्राप्तुं पदं फणिपतेर्यदि कौतुकं वः ।
विश्वप्रकाशमनिशं तदिदं निषेव्यं सम्भाव्यतां परमशाब्दिकशेखरश्रीः ॥

सतां पुस्तकसंभारभारमोक्षः कृतो मया ।
नामानुशासनमिदं संपूर्णं तन्वताद्भुतम् ॥
एकद्वित्रिचतुःपञ्चषड्वर्गानुक्रमोज्ज्वलैः ।
कान्तादिवर्गैर्नानार्थैः सङ्ग्रहोऽयं वितन्यते ॥
नानार्थैः प्रथमान्तोऽत्र सर्वत्रादौ प्रदर्शितः ।
सप्तम्यन्तेषु शब्देषु वर्तमानः सुनिश्चितः ॥
दृष्टान्तेन सह क्वापि सप्तम्याधार एव च ।
स्पष्टानां भिन्नलिङ्गानां क्वाप्यत्र पुनरुक्तता ॥
अकारो ब्रह्मविष्ण्वीशकमठेष्वङ्कणे रणे ।
गौरवेऽन्तःपुरे हेतौ भूषणे भ्रूसुमध्ययोः ॥
आकारस्तु घटे भावे परितापे पितामहे ।
इकारः फणिरत्नार्चिरग्रतोऽर्थशुभार्थयोः ॥
हरे करेणुसङ्घाते निशाकरकरे स्मरे ।
ईकारोऽब्जदले यक्ष्यां वाण्यां कमलकेसरे ॥
रचनायां शक्रचापे बाणे फणिनि कम्बले ॥ . . .

End:

यावन्नमेति साध्ये स्यात् यावदागामिनिश्चये ।
यावदागामिकाले स्यात् कर्मारम्भावसानयोः ॥
तद्यावदिति सन्देशे न निर्देशानिदेशयो : ।
कर्मविघ्ने वितर्के स्याद्दुष्करेऽपि कथंचन ॥
इत्यन्योन्यस्य संसर्गात् धातुसंसर्गतः पृथक् ।
यथा विशेषार्थकृतस्तथा कविभिरिष्यताम् ॥

Colophon :—इति विश्वप्रकाशः समाप्तः ॥

---

17. 18. अमरुकव्याख्या (शृङ्गारदीपिका.)

Beginning:

ज्याकृष्टिबद्धकटकामुखपाणिपृष्ठ-
प्रेङ्खन्नखांशुचयसंवलितो मृडान्याः ॥
त्वां पातु मञ्जरितपल्लवकर्णपूर-
लोभभ्रमद्भ्रमरविभ्रमभृत्कटाक्षः ॥

ज्याकृष्टीति ॥ मृडान्याः दुर्गायाः कटाक्षः अपाङ्गदर्शनं त्वां पात्विति सम्बन्धः । कीदृशः कटाक्षः । ज्याकृष्टिबद्धकटकामुखपाणिपृष्ठप्रेङ्खन्नखांशुचयसंवलितः ज्याकृष्टये सम्बद्धः कटकामुखपाणिः कटकामुखो नाम धनुराकर्षणहस्तविशेषः " तर्जनीमध्यमामध्ये पुङ्खोऽङ्गुष्ठेन पीड्यते । तस्मिन्ननामिकायोगात् स हस्तः कटकामुखः " ॥ तस्य पृष्ठे पश्चाद्भागे प्रेङ्खन्तः चलन्तः नखानामंशवः तेषां चयः तेन संवलितः समानं मिलितो मिश्रः पुनः कीदृशः मञ्जरितपल्लवकर्णपूरलोभभ्रमद्भ्रमरविभ्रमभृत् मञ्जरितः सञ्जातमञ्जरीकः " तदस्य सञ्जातं तारकादिभ्य इतच् " इति इतच्प्रत्ययः मञ्जरितश्चासौ पल्लवश्च स एव कर्णपूरः कर्णावतंसः तत्र लोभेन स्पृहया

भ्रमन् भ्रमरः तस्य विभ्रमं लीलां बिभर्तीति विभ्रमभृत् । अत्रोपमालङ्कारः नखांशुचयमञ्जर्योः पाणिपल्लवयोः कटाक्षभ्रमरयोश्च सादृश्यप्रतीतेर्विद्यमानत्वात् यथाकथंचिद्यत्रोद्भूतमुपमानमित्युक्तत्वात् ।अत्र कविः शृङ्गाररसात्मकं काव्यं प्रारभमाण आदौ वीररसाभिव्यञ्जिकां देव्या धनुराकर्षणक्रियां किमुक्तवानिति नाशङ्कनीयं येनात्र शृङ्गाररसात्मिकाया एव वश्यमुखिसंज्ञाया देव्या ध्यानं विवक्षितवान् ।उक्तं च त्रिपुरासारसिन्धौ। सन्धाय सुमनोबाणं कर्षन्तीमैक्षवं धनुः । जगज्जैत्रीं जयारक्तां देवीं वश्यमुखीं भजेदिति ।

॥ मू ॥ क्षिप्तो हस्तावलग्नः प्रसभमभिहितोऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितस्सम्भ्रमेण ।
आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिस्साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधस्स दहतु दुरितं शाम्भवो वश्शराग्निः ॥

शाम्भवः शराग्निः वः युष्माकं दुरितं अंहोऽशुभं च दहत्विति सम्बन्धः

End:

सालक्तकेन नवपल्लवकोमलेन
पादेन नूपुरवता मदलालसेन ।
यस्ताड्यते दयितया प्रणयापराधात्
सोऽङ्गीकृतो भगवता मकरध्वजेन ॥

स्पष्टोऽर्थः ॥ अत्र दयितया पादेन ताडितोऽपि भगवता मकरध्वजेनाङ्गीकृत इत्यनेन नानाविधैरुपचारैरुपलालितैः किमुतेत्ययमर्थः सूचितः । एतावता कामपुरुषार्थस्योपादेयत्वमुक्तं भवति ॥

Colophon :—इति श्रीवीरनारायणसकलविद्याविशारदकोमटिवेमभूपालविरचिता शृङ्गारदीपिका समाप्ता ॥

19. कप्फणाभ्युदयः.

Beginning:

सर्वज्ञतादिगुणगोचरमाप्यौ यो
ध्येयो यतोऽपि यतिबन्धुर .... बोधिः।
मानाय निश्चितचतुर्विधवित्तमार्तिः
मूर्तिर्दिशां दिशतु दाशबलिः शिवं नः॥

अस्ति प्रथा परमदैत्यसुखायनाभः
सूतागजाननगुहावसिताधिविन्ध्यम्।
लीलावतीति नगरी कलितापदाना,
पुंवर्गभावतरणे हरिणाङ्कनेन॥

या तुङ्गसौधतलकीलितकेतुदण्ड-
षण्डैर्जवाज्जलमुचामभिपाटितानाम्।
उत्सङ्गिनीभिरवतंसपताकिकाभि-
र्विद्धं व्यथादिव दिवि व्रणपट्टिकाभिः॥ . . .

Colophon:—इति श्रीकाश्मीरभट्टशिवस्वामिकृतौ कप्फणाभ्युदये महाकाव्ये नगरीनरेन्द्रवर्णना नाम प्रथमः सर्गः

अथोत्तराणां नृपमण्डलक्रिया
विचारहेतोः प्रहितो हितक्रियम्।
कदाचिदेनं समये सभासदं
प्रतापमाप प्रणिधिः प्रजापतिम्॥ . . . .

इति कप्फणाभ्युदये चरविक्षेपविन्यासो नाम द्वितीयसर्गः

संप्राप्य प्रणिधिगिरां गरीयसीना-
मत्यन्तं तरलितताम्रतारकाणाम्।
संरम्भभ्रुकुटिचलद्रू....(द्रुवक्र) भासां
क्रोधेन प्रसभमलम्भि भूपतीनाम्॥ . . . .

इति श्रीकष्फणाभ्युदये महाकाव्ये सभासंक्षोभो नाम तृतीयः सर्गः

अपसदसि समस्ता यस्तु भूपालचक्रे
प्रकटितगुरुकोपारम्भसंरम्भजृम्भे ।
वहति विलसितानि प्रस्तुतानि प्रचण्ड-
प्रलयजलदजालाडम्बरैरभ्यरन्धि ॥ . . . . . .

इति श्रीकष्फणाभ्युदये महाकाव्ये राजवाक्यं नाम चतुर्थः सर्गः

इति तत्र सुबाहुभारतमिनुसन्धातुमवन्ध्यया गिरा ।
गुरुसङ्गरकाम्यया कथं विदधानेषु नृपेषु निष्ठुरम् ॥ . . . .

इति श्रीकष्फणाभ्युदये महाकाव्ये दूतीसंप्रेषणं नाम पञ्चमः सर्गः

अखर्वमौर्वाग्निमिवोदधेः स्रुतं वंशीश्वरश्यामसमीरणोरणैः ।
जलप्रभाडम्बरचुम्बिताम्बरं प्रकृष्ट . . . चन्दनाचलम् ॥ . .

इति श्रीकष्फणाभ्युदये महाकाव्ये पर्वतवर्णना नाम षष्ठः सर्गः

इत्थं तास्ताः क्ष्माधरवस्तुस्तुतिगर्भाः
श्रुत्वा श्राव्या विश्रुतविद्याधरवाचः ।
शैलोत्सङ्गश्रीपरिभोगस्पृहयालुः
स प्रास्तावीत्संस्तुतिमाक्रीडविहारम् ॥ . . . . . .

इति श्रीकष्फणाभ्युदये महाकाव्ये शिबिरसन्निवेशो नाम सप्तमः सर्गः

अथ समं क्षितिपालमनोमुदे खचरसिद्धिवशाद्विविशुः श्रियम् ।
मधुमदध्वनितालिमनोरमद्रुमलये मलये सकलर्तवः ॥ . . . .

इति श्रीकष्फणाभ्युदये महाकाव्ये सर्वर्तुवर्णना नामाष्टमः सर्गः

अथात्यये गगनविहारभूभुवां गिरां गिरावृतुगणबन्धबन्धुरे ।
महीपतिः कुसुमचिचीषया चिरं वनावनीं व्यहृत वधूभिरावृतः ॥.

इति श्रीकष्फणाभ्युदये महाकाव्ये कुसुमावचयो नाम नवमः सर्गः

अथ वनगहनान्निरीय पृथ्वी-
तलबिलनिर्गतनागनायिकाभाः ।
अभिनवदिनकृत्करालताप-
क्रमवशमन्धरमन्धरं ययुस्ताः ॥ . . . .

इति श्रीकण्फ . . . सलिलवर्णनं नाम दशमः सर्गः

अथ सुदृशां प्रियप्रणयविभ्रमभावनया
समुदियाय शनैः सुरतोत्सवसस्पृहता ।
रविरपि सञ्जहार करडम्बरमम्बरतः
फलमभिवाञ्छितानुपदभावि हि भव्यधियाम् ॥ .

इति श्रीकण्फ . . . दिनान्तवर्णनं नाम एकादशः सर्गः

अथैपदाधूततमोनुबन्धा श्राव्या रुचिः केतकिधूलिवर्णा ।
एण्यान्निशानाथचरिष्णुरथ्यरथ्यारजोराजिरिवाविरासीत् ॥ . .

इति . . . चन्द्रोदयप्रसाधनवर्णनं नाम द्वादशः सर्गः

धृतसन्धिरसौ विचित्रवृत्तिर्विदधानः स्फुटशुद्धपात्रयोगम् ।
मधुवारविधिः सनायिकाङ्गो ववृधे नाटकवन्नितम्बिनीनाम् ॥ . .

मधुपूरपरिप्लुतेऽङ्गनाना-
मतिवृद्धोऽप्यवतीर्य चित्तमार्गे ।
विजहार निरर्गलं कोमोन (मदेन)
न च चस्खाल यदद्भुतं तदासीत् ॥ 38 ॥

अवनीकिलता वसन्तमासः (?)
सुरताशोकपुरन्ध्रिपादघातः ।
नयनोत्पलतान्तमातरिश्वा
जगृहे घोषदृशां मदो वधूनाम् ॥ 39 ॥

अग्रेविकीर्णनिभृतप्रणयादिवाक्य-
पुष्पाञ्जलिःसरलविभ्रमसूत्रधारः ।
प्रस्तावनां दयितसन्धिरसैःसमाप्य
सिद्धिं व्यधत्त रमणीरतनाटकस्य ॥ 40 ॥

इति . . . मधुपानवर्णनो नाम त्रयोदशः सर्गः

रसरभसया रागस्थि(त्या)या मुहुः प्रियलालसं
चिरपणितया मानावृत्त्या मुहुः पिहितस्पृहम् ।
मधुमदमुदा लेभे लभ्यं न दुर्लभवल्लभो
निधुवनविधिक्रीडालम्बं नितम्बवतीजनः ॥ . . .

इति . . . . . सम्भोगवर्णनो नाम चतुर्दशः सर्गः

गायं गायन्निरवधि वधूसौधसेनामधोधः
कामक्रीडाकुसुमकलिकाकुड्मलीभावमूलम् ।
इत्थंकारं जनिचरजनिज्यानिसङ्कल्पकल्यां (?)
कल्यम्भर्त्रे हृतमचकथन् वन्दिनो....वनाभिः ॥ . . .

इति . . . . . प्रदोषवर्णनो नाम पञ्चदशः सर्गः

अथोत्साहवतेव श्रीः प्रतीतिः कविनेव च ।
दर्शकेन पुरी प्रापि प्रसेनजिदधिष्ठिता ॥ . . . .

इति . . . . . सैन्यप्रस्थानो नाम षोडशः सर्गः

दर्शकानुशयदर्शनदर्शे (?) पिण्डपातन अथारिवधूनाम् ।
कष्फणोऽपि चतुरं रणदीक्षः क्रोधजे पुलकवारिणि सस्नौ ॥ . .

इति . . . . . . . . सङ्कुलयुद्धे सप्तदशः सर्गः

अथ म्लानचमूवर्तिसमुदायबलोदयः ।
आसेदे नृपचक्रेण समुदायबलोदयः ॥ . . . .

इति . . . . . . युद्धवर्णनो नामाष्टादशः सर्गः

अहतोसातुद्धो रणवहोपहृतमिपोवधारणे ।
पुरुषवरेण खगं सेदुरादुतोसभासादि ॥ . . . .

इति . . . संस्कृते प्राकृतसमादेशे एकोनविंशः सर्गः

अद्धावर्चाचाटुचर्याभिरुच्चैः कृत्वेत्याजिज्जिनिजभ्याजनस्य (?)।
आज्ञाधीयां दाक्षिणात्ये क्षितोशे पृथ्वीभूते शखिनीवानिलेन ॥ . . .

इति श्रीभट्टशिवस्वामिनः कृतौ कष्कणाभ्युदये महाकाव्ये अभ्युदयलाभो नाम विंशः सर्गः ।

---

20. 21. कृष्णकर्णामृतम् सव्याख्यानम् ॥

Beginning:

चिन्तामणिर्जयति सोमगिरिर्गुरुर्मे
शिक्षागुरुश्च भगवान् शिखिपिञ्छमौलिः ।
यत्पादकल्पतरुपल्लवशेखरेषु
लीलास्वयंवररसं लभते जयश्रीः ॥ 1 ॥

श्रीरामं सीतया साकं मुकुन्दं मौनिशेखरम् ।
यज्वानं वाजपेयेन यज्ञेशं प्रणतोऽस्म्यहम् ॥

येषां सन्दर्शनादेव षट्छास्त्रीवशगा भवेत् ।
यतीन्द्रान्वासुदेवेन्द्रान् नमामोऽभीष्टसिद्धये ॥

पलुपर्त्यन्वये जातपापयल्लयसूरिणा ।
कर्णामृतस्य व्याख्यानं क्रियते कृतिनां मुदे ॥

मन्त्रशास्त्रे महाभाष्ये मणौ मीमांसयोस्सदा ।
मतिर्यस्य भवेत्तेन मन्त्रव्याकृतिरीदृशी ॥

तथापि पूर्णं क्षीरेण स्वर्णपात्रं करे वहन् ।
पिबेति क्षीरदाता मे सहाय इति साहसम् ॥
पेद्दिभट्टादिभिः प्राप्ययशसे प्रार्थना न मे ।
किन्तु कृष्णस्मृतिर्नित्यं भवत्विति मतिर्मम ॥
अर्थान्तरपरिस्फूर्तिर्यत्र क्वापि भवेद्यदि ।
भाष्यभास्करौ दृष्ट्वा परितुष्यन्तु ते जनाः ।
अज्ञानाद्यत्र कुत्रापि विपरीतार्थवर्णनम् ।
कृतं चेच्छोध्यतां तत्तद्विद्भिर्वीतमत्सरैः ॥

तत्र प्रथमशतके आदित आरभ्य केषु चिच्छ्लोकेषु मम मनः कृष्ण एव प्रवर्ततां नान्यत्रेति प्रार्थना मनस्स्वास्थ्ये सति तदनन्तरं केषु चिच्छ्लोकेषु कृष्णचाक्षुषताप्रार्थना चाक्षुषसाक्षात्कारे सति केषु चिन्नमस्कारादिकमिति श्लोकानां क्रमो ज्ञेयः॥ अत्र ग्रन्थकर्ता ग्रन्थं चिकीर्षुरादौ गुरून्महीकरोति ॥ चिन्तामणिरिति ॥ चिन्तामणिर्नाम मन्त्रविशेषः यच्चिन्तनवशात्कृतार्थोऽभूत्कविः स जयति सर्वोत्कर्षेण वर्तत इत्यर्थः ।

ननु गुरुं प्रकाशयेद्धीमान्नतु मन्त्रं प्रकाशयेत् । इति चेन्न । तच्चिन्तामणिमन्त्रचिन्तनफल इत्यादिना श्रीहर्षेण प्रकाशितत्वात् । स्मृतिस्तु साध्यमन्त्रविषया न तु सिद्धमन्त्रविषयेति ज्ञेयम् । यद्वा चिन्तामणिरिति कश्चिद्योगी यत्सन्निधानेन कविना योगाभ्यासः कृतः । यद्वा चिन्तामणिरिति श्रीकाकुलेश्वरानुग्रहवशान्निर्मलान्तरङ्गा काचिद्वारवनितेति वा । यद्वा चिन्तामणिरिति सोमगिरेर्विशेषणमस्मिन्पक्षे चिन्तामणिवदभीष्टप्रदा सोमगिरिर्नाम काचिद्वारवनितेति वा । यद्वा उक्तविशेषणविशिष्टः सोमगिरिर्नाम महावाक्योपदेष्टा गुरुः संप्रदायप्रवर्तकः मे मम गुरुः जयति शिक्षागुरुरन्तर्यामित्वेन शिक्षकः शिखिनो मयूरस्य पिञ्छं बर्हं मौलौ शिरसि यस्य तत्तथोक्तः । भगवान् षड्गुणैश्वर्यसंपन्नः श्रीकृष्ण

इत्यर्थः सोऽपि जयति येषां पादावेव कल्पतरुपल्लवशेखराणि कल्पवृक्ष किसलयश्रेष्ठानि तेषु विषये जयश्रीः लीलाः विलासाः ताभिर्युते स्वयंवरे रसमनुरागं लभते 'लीला विलासक्रिययोः' 'गुणे रागे द्रवे रस' इति चामरः। कृष्णादिपादविषयकस्वयंवरेऽनुरागं प्राप्तवती जयश्रीरित्यर्थः। रूपकालङ्कारः ॥ 1 ॥

End:

अत्रापि मत्प्रणीतकर्णामृतग्रन्थेऽपि तां तां प्रीतिं कुरु वीप्सायां द्विर्भावः ॥ 106 ॥ . . . . . . . . .

Colophon:—इति श्रीलीलाशुकविरचिते श्रीकृष्णकर्णामृतस्तोत्ररत्ने तृतीयशतकं समाप्तम् ॥

कृष्णकर्णामृतम् (सव्याख्यानम्) द्वितीयशतकम्.

एकतः सिद्धकोदण्डबाणानप्यैक्षवं धनुः ।
पुष्पास्त्रायेव वेण्वादि नमो रामाय गृह्णते ॥

शतकान्ते तद्वैभवमेव मदीयज्ञानकरणं गोचरयत्वित्युक्तं तद्वैभवमेवाह अभिनवेत्यादिना।

अभिनवनवनीतस्निग्धमापीतदुग्धं-
दधिकणपरिदिग्धं मुग्धमङ्गं मुरारेः ।
दिशतु भुवनकृच्छ्रच्छेदि तापिञ्छगुच्छ-
च्छवि नवशिखिपिञ्छालाञ्छितं वाञ्छितं नः ॥

अभिनवेति॥अभिनवनवनीतेन नूतननवनीतेन स्निग्धं स्वच्छं आपीतं ईषत्पीतवर्णं दुग्धं क्षीरबिन्दवो यस्य तत् ईषत्पीतवर्णक्षीरकणैर्व्याप्तमित्यर्थः। यद्वा पीयमानं दुग्धं येन तत्तथोक्तमिति वा दधिकणैः परिदिग्धं समन्ताद्दूषितं तापिञ्छस्य तमालवृक्षविशेषस्य। कालस्कन्धस्तमालःस्यात्

तापिञ्छोप्यथसिंध्रक इत्यमरः। गुच्छानां स्तबकानां छविरिव कान्तिरिव कान्तिर्यस्य तत् नवया नूतनया शिखिपिञ्छया मयूरबर्हेण लाञ्छितमलङ्कृतं यद्वा नवेन शिखिपिञ्छेन आलाञ्छितं ईषदलङ्कृतमिति वा पिञ्छाशब्दस्य अकारान्तप्रयोगो निघण्ट्वन्तरेषु मृग्यः । तदुक्तं चम्पुरामायणे। इन्द्रजालविधिसाधकपिञ्छिकेवेति भोजराजप्रयोगः। भुवनानां समस्तजनानां कृच्छ्रमुपद्रवं छेदितुं शीलमस्यास्तीति तथोक्तं मुरारेः कृष्णस्य मुग्धं सुन्दरं। मुग्धः सुन्दरमूढयोरित्यमरः। अङ्गं शरीरं नः अस्माकं वाञ्छितं अभीष्टं दिशतु ददातु ॥ 1 ॥

End :—

हे गोपालकेति॥ गाः पालयतीति गोपालकः तस्य संबुद्धिः, कृपा दया सैव जलं तस्य निधिः समुद्रः तस्य संबुद्धिः, सिन्धोः कन्या लक्ष्मीः तस्याः पतिः तस्य संबुद्धिः, कंसस्य अन्तकः शत्रुः तस्य संबुद्धिः, गजेन्द्रे करुणा दया तस्याः पारं परतीरं अन्तरमिति यावत् तत्प्राप्तः पारीणः तस्य संबुद्धिः गजेन्द्रनिमित्तमत्यन्तदयां कुर्वन्नित्यर्थः माधवः लक्ष्मीधवः तस्य संबुद्धिः, रामः बलरामः तस्यानुजः कनीयान् तस्य संबुद्धिः, जगतां त्रयं जगत्त्रयं तस्य गुरुः शिक्षकः तस्य संबुद्धिः, पुण्डरीकाक्ष सिताम्भोजनयन गोपीजनानां बल्लवीजनानां नाथः कान्तः तस्य संबुद्धिः मां पालय रक्ष। त्वां विना परमन्यं देवतान्तरमित्यर्थः न स्मरामि त्वद्व्यतिरिक्तं देवतान्तरमिति न स्मरामि त्वमेव मां पालयेति भावः॥108॥

---

22. श्रुतिरञ्जनी अष्टपदीव्याख्या.

Beginning :

धवलजलदवर्णं चन्द्रमःखण्डचूडं
परशुहरिणहस्तं ज्ञानमुद्राभिरामम्।

भुजगवरविराजत्कङ्कणाजानुबाहुं
दलितनिजजनार्तिं दक्षिणामूर्तिमीडे ॥

अस्त्यान्ध्रदेशे चरकूरिवंश्यः कृष्णातटे काश्यपगोत्ररूढः ।
यो बह्वृचानां बहुमाननीयो धत्ते सदा कीर्तिसुवैजयन्तीम् ॥

आसन्नपूरुषं यत्र लक्ष्मीवाण्योरवस्थितिः ।
आसीत् कपोतलिङ्गस्य वरात् कुण्डलिवासिनः ॥

यत्र नामादिमशिशोरङ्कितं वेङ्कटेशितुः ।
सलक्ष्मीकरस एवार्च्यो भगवान् गृहदेवता ॥

तत्रोदभूत्तिम्मयसोमयाजिबुधोऽष्टभाषाकविपट्टभद्रः ।
नित्यान्नदाता निजभक्तिलब्धवृषाकपायीरमणप्रसादः ॥

तस्मादुदैद्बह्वृचचक्रवर्ती यज्ञेश्वरः पण्डितसार्वभौमः ।
सर्वाम्बिका सर्वगुणोपपन्ना तस्य द्वितीयाभवदम्बिकाभा ॥

ताभ्यामुदभवन् पुत्राः सर्वाचारनियामकाः ।
विधिमन्त्रार्थवादज्ञाश्चत्वारो निगमा इव ॥

षड्दर्शनीतत्त्वविवेककर्ता स्वशिष्यसंपादितदिग्जयश्रीः ।
तेष्वादिमः पण्डितपट्टभद्रः श्रीकोण्डुभट्टो जयतीह लोके ॥

लक्ष्मीधरस्तदनुजो दक्षिणामूर्तिकिङ्करः ।
सर्वविद्वत्कविमतः सज्जनाप्तो विराजते ॥

षड्भाषाचन्द्रिका येन कृताथो रस(स्वर)मंजरी ।
प्रसन्नराघवव्याख्या रचिताथ हरेर्मुदे ॥

तेन लक्ष्मीधरार्येण क्रियते श्रुतिरञ्जनी ।
विद्वत्कविमुदे गीतगोविन्दस्यार्थदीपिका ॥

न बुध्यते बुधैर्गीतगोविन्दस्यार्थगौरवम् ।
व्याख्यानशतकेनापि विहाय श्रुतिरञ्जनीम् ॥
यदत्रेष्टं न लिखितं यद्विरुद्धमनीप्सितम् ।
त्रितयं तस्य हे सन्तः क्षम्यतां कृपया मयि ॥
यत्नेन गच्छतः क्वापि स्खलनं स्यान्महीयसः ।
हसन्त्यसाधवस्तत्र समादधति साधवः ॥
रत्यलङ्कारसंगीतशब्दशास्त्रविचक्षणैः ।
विलोकनीया विद्वद्भिर्व्याख्या सा श्रुतिरञ्जनी ॥

अथ खलु तत्रभवान् जयदेवनामा महाकविः सङ्गीतसाहित्यसारस्य पारदृश्वा गीतप्रबन्धनिर्माणवशेन सकलपुरुषार्थसंपादनमन्दारायमाणां गोपिकामनोहरमनोहरवर्णानां मनसि निधाय चिकीर्षितस्य गीतगोविन्दाख्यप्रबन्धस्याविघ्नेन परिसमाप्तिप्रचयगमनमाशासानः "काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये । सद्यः परनिर्वृतये कान्तासम्मिततयो पदेशयुजे" ॥ इत्यालङ्कारिकवचनप्रमाण्यात् काव्यस्यानेकश्रेयस्साधनतां च पश्यन्नाशीर्नमस्क्रियावस्तुनिर्देशो वापितन्मुखमित्यार्यपरिपाटीमनुसरन् कात्यायनीसमाराधनाय कालिन्दीतटं प्रतिगतस्य नन्दगोपस्योक्तिव्याजेन प्राप्तं राधामाधवयोर्विहाररूपं वस्तु काव्यबीजत्वेन निर्दिशति ॥

मेघैरिति ॥ मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमैः
नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय ।
इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं
राधामाधवयोर्जयन्ति यमुनाकूले रहःकेलयः ॥

अत्र "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि हि शास्त्राणि प्रथन्त" इति न्यायेन पद्यादौ माङ्गल्यशब्दे प्रयोक्तव्ये सति श्रीप्रदगुरुत्रयात्मकभूमिदेवताको मगण आदौ प्रयोज्यः । उक्तं च मगणस्य श्रीप्रदत्वम् ।

* * * *

Colophon :—इति श्रीमदखिलविद्यापरिवारदक्षिणामूर्तिमहादेवप्रसादलब्धविद्यापूर्वोत्तरमीमांसाशब्दतर्कसाहित्यसार्वभौमचरकूरिकोण्डुभट्टोपाध्यायानुजेन सर्वाम्बिकागर्भशुक्तिमुक्तामणिना लक्ष्मणसूरिणा विरचितायां गीतगोविन्दव्याख्यायां श्रुतिरञ्जनीसमाख्यायां पञ्चमस्सर्गः ॥

---

## 23. नीलकण्ठविजयचम्पुः (त्रय आश्वासाः).

(असमग्रः)

Beginning :

वन्दे वाञ्छितलाभाय कर्म किं तन्न कथ्यते ।
किं दम्पतिमिति ब्रूयामुताहो दम्पती इति ॥ 1 ॥

दृष्ट्वा कौस्तुभमप्सरोगणमपि प्रक्रान्तवादा मिथो
गीर्वाणाः कति वा न सन्ति भुवने भारा दिवः केवलम् ।
निष्क्रान्ते गरले द्रुते सुरगणे निश्चेष्टिते विष्टपे
मा भैष्टेति गिराविरास धुरि यो देवस्तमेव स्तुमः ॥ 2 ॥ . . .

कति कवयः कति कृतयः कति लुप्ताः कति चरन्ति कति शिथिलाः ।
तदपि प्रवर्तयति मां शङ्करपारम्यसङ्कथालोभः ॥ 6 ॥ . . . .

चौर्येण प्रणयेन वापहरतः पल्लीषु गव्यान्यपि
ख्यायन्ते चरितानि चेत्कविकुलोद्गीतानि गाथाशतैः ।
त्रैलोक्योत्कटकालकूटकबलीकारप्रकारं पुनः
स्तोतुं के प्रथमेऽपि नाम कवयोर्दूरोऽधिकारस्तु नः ॥ 9 ॥

अष्टत्रिंशदुपस्कृतसप्तशताधिकचतुस्सहस्रेषु ।
कलिवर्षेषु गतेषु ग्रथितः किल नीलकण्ठविजयोऽयम् ॥ 10 ॥

अस्ति समस्तसुरासुरस्तोमवन्दितचरणारविन्दस्य भगवतो महेन्द्रस्य स्थानमास्थानममृतान्धसामायतनमाश्चर्याणामाकरो रत्नानामवधिर्वैषयिकानन्दस्य किमपरमगोचरे गिराममरावती नाम नगरी॥ . . . .

जानाम्यहमुमाकान्तं जानासि त्वं च मद्गिरा।
जानन्ति किमिमे मूढास्तत्सम्यगनुशिष्यताम्॥

इति परमुपदेशं देशिको देवतानां
निरुपधिकरुणाब्धिर्निर्जरेभ्योऽवतीर्य।
स्वयमपि हृदि गाढं चिन्तयन्निन्दुचूडं
मिषति कमलपीठे पद्मनाभस्तिरोऽभूत्॥

अथ यथोपदेशमिन्दिरापतेरादिश्यादेष्टव्यमन्तर्हिते पितामहे पूर्णमनोरथा दिवौकसः पुरहराराधनकौतूहलेन पुनरासेदुरुपत्यकां परमानन्दमन्थरा मन्दराद्रेः॥ . . . . . . . . .

Colophon:—इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीकण्ठमतप्रतिष्ठापनाचार्यचतुरधिकशतप्रबन्धनिर्वाहकश्रीमन्महाव्रतयाजिश्रीमदप्पयदीक्षितसोदर्यश्रीमदाच्चादीक्षितपौत्रेण श्रीमन्नारायणदीक्षितपुत्रेण भूमिदेवीगर्भसंभवेन नीलकण्ठदीक्षितेन विरचिते चम्पुकाव्ये द्वितीय आश्वासः॥

उपासीना नानाविधिभिरुपहारैश्च विविधै-
श्शरण्यं लोकानां शशधरकलोत्तंसममराः।
मृषा सन्धित्सन्तः प्रकृतिकुटिलैर्दानवगणै-
र्विरिञ्चस्यादेशादवृणुत गुरुं दूत्यविधया॥

निर्मग्नमन्दरमणिद्युतिसंप्रदिग्धा निष्पेतुरम्बरतले पयसः कणा ये।
लग्नाश्चिरायं लिकुचामलकाम्रमात्रास्तारास्त एव परिणेमुरिति प्रतीमः॥

पथि गिरिवरादस्माद्धारावसन्नसुरासुर
प्रतिपदकृतस्कन्धव्यत्यासमंभ्रमकम्पितात् ।
मणिभिरभितो यस्यां यस्यां भुवि स्खलितं क्वचित्
समजनि खनिस्सा सा नाम स्थलेषु जलेषु च ॥

अपिच ॥ विदरादम्बरतलादापततोऽस्य महता वेगेन प्रकीर्यमाणे पर्यन्तगते परिपीवीयमाने च दरीमुखैरेव परिसरगते च पयसि शून्यमिव निरवशेषमर्णव मन्यमाना . . . . . . . . , .

---

## 24. अनर्घराघवम्.

Beginning:

निष्प्रत्यूहमुपास्महे भगवतः कौमोदकीलक्ष्मणः
कोकप्रीतिचकोरपारणपटुज्योतिष्मती लोचने ।
याभ्यामर्धविबोधमुग्धमधुरश्रीरर्द्धनिद्रायितो
नाभीपल्वलपुण्डरीकमुकुलः कम्बोस्सपत्नीकृतः ॥

विरमति महाकल्पे नाभीपथैकनिकेतनः
त्रिभुवनपुरशिल्पी यस्य प्रतिक्षणमात्मभूः ।
किमधिकरणं कीदृकस्य व्यवस्थितिरित्यसा
वुदरमविशङ्कुष्टुं तस्मै जगन्निधये नमः ॥

नान्द्यन्ते सूत्रधारः ॥ लवणोदवेलावनालीतमालकन्दलस्य त्रिभुवनमौलिमण्डनमहानीलमणेः कमलाकुचकलशकेलीविरचितकस्तूरिकापत्राङ्कुरस्य भगवतः पुरुषोत्तमस्य यात्रायामुपस्थानीयास्सभासदः । दतः कुतश्चिद्द्वीपान्तरादागतेन कलहकन्दलनाम्ना कुशीलवेन रौद्रबीभत्सभयानकभूयिष्ठं कमपि प्रबन्धमभिनयता नित्याङ्किलायमुद्वेजितो लोकः । तत्कस्यचिदभिमतरसभाजः प्रेक्षणकस्य प्रयोगानुज्ञया नाट्यवेदोपाध्यायबहुरूपान्तेवासीमध्यदेशीयस्सुचरितो नाम भरतपुत्रो भवद्भिरनुगृह्यै ॥

प्रीतिर्नाम सदस्थानां प्रिया रङ्गोपजीविनाम्।
जित्वा तदपहर्तारमेष प्रत्याहरामि ताम्॥

(आकाशे कर्णं दत्वा) किं ब्रूथ वैदेशिको भवानसमग्रपात्रः कथमीदृशे कर्मणि प्रगल्भत इति (विहस्य सप्रश्रयमञ्जलिं बध्वा) हन्त भोः किमेवमुदीर्यते भवद्विधानामाराधनी प्रवृत्तिरेव मे पात्राणि समग्रयिष्यति। यतः

यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम्।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति॥ . . . .

तत्रापि तावन्निरूपयामि रूपकमभिरूपमीदृशम्। मुहूर्तमिव स्थित्वा स्मरणमभिनीय सोल्लासं। अस्ति मौद्गल्यगोत्रसंभवस्य महाकवेर्भट्टश्रीवर्धमानतनूजन्मनस्तन्तुमतीनन्दनस्य मुरारिकवेः कृतिरभिनवमनर्घराघवं नाम नाटकं तत्प्रयुञ्जानास्सामाजिकानुपास्महे। विचिन्त्य सहर्षम्। अहो परिषदाराधनस्य रमणीया खल्वियं सामग्री.

यतः॥ मद्वर्ग्या रसपाठगीतिगतिषु प्रत्येकमुत्कर्षिणो
मौद्गल्यस्य कवेर्गभीरमधुरोद्गारा गिरां स्यूतयः।
धीरोदात्तगुणोत्तरो रघुपतिः काव्यार्थबीजं मुनि
र्वाल्मीकिः फलति स्म यस्य चरितस्तोत्राय दिव्या गिरः॥

* * * *

End:

वसिष्ठः॥ सहर्षं किं ते भूयः प्रियमुपहरामि॥

रामः॥ किमपरं प्रियमस्ति.

ताताज्ञामधिमौलि मौक्तिकमणिं कृत्वा महापोत्रिणो
दंष्ट्राविन्ध्यविलासपत्रशबरी दृष्टा भृशं मेदिनी।
सेतुर्दक्षिणपश्चिमौ जलनिधी सीमन्तयन्निर्मितः
कल्पान्तं च कृतं च सर्वमदशग्रीवोपसर्गं जगत्॥

तथापीदमस्तु भरतवाक्यं ॥

समुन्मीलत्सूक्तिस्तबकमकरन्दैः श्रवणयो-
रविश्राम्यद्धारास्नपनमुपचिन्वन्तु कवयः ।
न शब्दब्रह्माख्यं परिमलमनाघ्राय च जनः
कवीनां गम्भीरं वचसि गुणदोषौ रचयतु ॥

अपिच ॥ देवस्यात्मभुवः कमण्डलुजलस्रोतांसि मन्दाकिनी-
गङ्गाभोगवतीमयानि पुनते यावत्त्रिलोकीमिमाम् ।
तावद्वीरयशोरसायनमधुस्यन्दः कवीनामयं
जागर्तु श्रुतिशष्कुलीवलयितव्योमावगाही गुणः ॥

इति निष्क्रान्तास्सर्वे ॥

Colophon :—इति श्रीमुरारिकृतावनर्घराघवे सप्तमोऽङ्कः ॥

---

25. अनर्घराघवव्याख्या (इष्टार्थकल्पवल्लीसमाख्या).

Beginning :

ओङ्कारार्थाय विज्ञानदायिने लोकसाक्षिणे ।
करुणानिधये श्रीमद्दक्षिणामूर्तये नमः ॥

अस्त्यान्ध्रदेशे चरकूरिवंश्यः कृष्णातटे काश्यपगोत्ररूढः ।
यो बह्वृचानां बहुमाननीयो धत्ते सदा कीर्तिसुवैजयन्तीम् ॥
नित्यान्नदाता निजभक्तिलब्धवृषाकपायीरमणप्रसादः ।
तस्मादुदैद्बह्वृचचक्रवर्ती यज्ञेश्वरः पण्डितसार्वभौमः ॥

सर्वाम्बिका सर्वगुणोपपन्ना तस्य द्वितीयाभवदम्बिकाम्बा ।

ताभ्यामुदभवन् पुत्राश्चत्वारः श्रीनिकेतनाः ।
विधिमन्त्रार्थवादज्ञाः चत्वारो निगमा इव ॥
षड्दर्शनीतत्त्वविवेककर्ता स्वशिष्यसम्पादितदिग्जयश्रीः ।
तेष्वादिमः पण्डितपट्टभद्रः श्रीकोण्डुभट्टो जयतीह लोके ॥

लक्ष्मीधरस्तदनुजो दक्षिणामूर्तिकिङ्करः ।
सर्वविद्वत्कविमतो जयति क्ष्मातले सुधीः ॥

सगार्हस्थ्ये चिरं स्थित्वा जित्वा सर्वं दिशस्सुधीः ।
सन्यस्याजनि योगीन्द्रो रामानन्दाश्रमाभिधः ॥

जगत्प्राणास्वादी प्रतिदिनमधस्तात्सुषितः
सदा रन्ध्रान्वेषी कुटिलतमवृत्तेन सहितः ।
द्विजिह्वानां वश्यः परुषविषसंस्पृष्टवचनः
कथं रामानन्दाश्रममुनितुलामेष्यति पतिः ॥

स करोति महायोगी मीमांसाद्वयपारगः ।
अनर्घराघवव्याख्यां प्रीतये विदुषां शुभाम् ॥'

प्रमादादन्यथाबोधादज्ञानाद्वा विलिख्यते ।
यदत्र तन्मया सद्भिः क्षन्तव्यं कृपया मयि ॥

अथ तावत् तत्रभवान् मुरारिर्नाम महाकविः प्रसिद्धकविसार्वभौमः सकलतन्त्रस्वतन्त्रः सङ्गीतसाहित्यसारस्यपारदृश्वा नाटकनामधेयरूपकनिरूपणापदेशेन सकलपुरुषार्थसन्तानसम्पादनसन्तानायमानमनन्ततनयानयनचकोरिकाचन्द्ररामचन्द्रचरितगुणवर्णनं मनसि निधाय चिकीर्षितस्य नाटकप्रबन्धस्याविघ्नपरिसमाप्तिप्रचयगमनमाशासानः काव्यं यशसे . .

. . . . . . . . . . . . . . .

इति परिपाटीमनुरुन्धन्नाटकादौ कर्तव्यां पूर्वरङ्गप्रधानाङ्गभूतां नान्दीमादावाचरति निष्प्रत्यूहमिति अत्र ॥ भगवतः पुरुषोत्तमस्य ते लोचने निष्प्रत्यूहं विघ्नाभावायोपास्महे मनोवाक्कायकर्मभिः भजाम इति क्रियाकारकसम्बन्धः ॥ उत्तरवाक्यस्थो यच्छब्दस्तच्छब्दोपादानं नापेक्षत इति नात्र तच्छब्दप्रयोगापेक्षा . . , . . . . .

End:

सद्यः रावणहननानन्तरमेव भद्रपीठप्रतिष्ठं सिंहासनारूढं अन्यं रावणाद्भिन्नं नतारं विभीपणाख्यं प्रपौत्रं दृष्ट्वा तुष्यन् विभीपणपट्टाभिपेकावलोकनेन गतरावणक्लेश इत्यर्थः एतादृशपुलस्त्यो रावणपितामहो यस्य तथोक्तः विभीपणराज्यदानेन पुलस्त्यसन्तोप एवं विधः एपः जानक्येव जाया यस्य स जानकीजानिः जायाया निङ् इति निङ् जगति जगत्सु विजयते सर्वोत्कर्षेण वर्तते पश्येति वाक्यशेपः । अनेन कृतकृत्यता सूचिता पात्रैस्त्रिचतुरैरङ्कस्तदन्ते सर्वनिर्गम इति वचनार्थं मनसि निधाय अङ्कपरिसमाप्तिं सूचयति इति निष्क्रान्ताविति अङ्क इति अङ्कं प्रत्यक्षनेतृरूपरामचरितत्वात् नानाविधानसंविधानरसाश्रयत्वाच्चेति सर्वं भद्रम् ॥

Colophon:—इति श्रीपरमहंसपरिव्राजकाचार्यकृष्णाश्रमपादशिष्यरामानन्दविरचितायां अनर्घराघवव्याख्यायां इष्टार्थकल्पवल्लीसमाख्यायां षष्ठोऽङ्कः ॥

---

### 26. प्रबोधचन्द्रोदयः.

Beginning:—

मध्याह्नार्कमरीचिकास्विव पयःपूरो यदज्ञानतः
खं वायुर्ज्वलनो जलं क्षितिरिति त्रैलोक्यमुन्मीलति ।
यत्तत्त्वं विदुषां निमीलति पुनः स्रग्भोगिभोगोपमं
सान्द्रानन्दमुपास्महे तदमलं स्वात्मावबोधं महः ॥

अपिच ॥ अन्तर्नाडीनियमितमरुल्लङ्घितब्रह्मरन्ध्रं
स्वान्ते शान्तिप्रणयिनि समुन्मीलदानन्दसान्द्रः ।
प्रत्यग्ज्योतिर्जयति यमिनः स्पष्टलालाटनेत्र-
व्याजव्यक्तीकृतमिव जगद्व्यापिचन्द्रार्धमौलेः ॥

नान्द्यन्ते सूत्रधारः ॥ आदिष्टोऽस्मि सकलसामन्तराजन्यचक्रचूडामणिमरीचिमञ्जरीनीराजितचरणकमलेन बलवदरिनिवहवक्षःकवाटपाटन-

विकटितनृसिंहरूपेण खलतरनरपतिकुलप्रलयकालमहार्णवमग्नमेदिनी-समुद्धरणमहावराहेण निखिलदिग्विलासिनीकर्णपूरीकृतकीर्तिमौक्तिकेन समस्ताशास्तम्बेरमकर्णतालास्फालनबहुलवातसम्पातनर्तितप्रतापानलेन श्रीमता गोपालेन यथाखलु सहजसुहृदो राज्ञः कीर्तिवर्मदेवस्य दिग्विजयव्यापारान्तरित परब्रह्मानन्दैरस्माभिरस्खलित नानाविधविषयरसविदूषिता इवातिवाहिता दिवसाः इदानीं कृतकृत्या वयम् ।

यथा ॥ नीताः क्षयं क्षितिभुजो नृपतेर्विपक्षा-
रक्षावती क्षितिरभूत् प्रथितैरमात्यैः ।
साम्राज्यमस्य विहितं क्षितिपालमौलि-
मालार्चितं भुवि पयोनिधिमेखलायाम् ॥

यत्पूर्वमत्रभवद्भिः कृष्णमिश्रैः प्रबोधचन्द्रोदयं नाम नाटकं निर्माय भवतः समर्पितमासीत् तदद्य राज्ञः कीर्तिवर्मणः पुरस्तादभिनेतव्यमिति । अस्ति चास्य भूपतेः परिषदस्तदवलोकने कुतूहलमिति तद्भवतु गृहं गत्वा गृहिणीमाहूय सङ्गीतकमनुतिष्ठामीति (परिक्रम्य नेपथ्याभिमुखमवलोक्य आर्ये) इत इतः (प्रविश्य) नटी ॥ एसम्हि आणवेदु अ (आ एषास्म्याज्ञापयत्वार्यः) को णिओओ अणुचि ठि अदुत्ति (को नियोगोऽनुष्ठीयतामिति) ॥

सू ॥ आर्ये विदितमेव भवत्या ॥
अस्ति प्रत्यर्थिपृथ्वीपतिविपुलबलारण्यमूर्छत्प्रताप-
ज्योतिर्ज्वालावलीढत्रिभुवनविवरो विश्वविश्रान्तकीर्तिः ।
गोपालो भूमिपालान् प्रसभमसिलतामात्रमित्रेण जित्वा
साम्राज्ये कीर्तिवर्मा नरपतितिलको येन भूयोऽभ्यषेचि ॥ . .

तेन शान्तपथस्थितेनात्मविनोदाय प्रबोधचन्द्रोदयं नाम नाटकमभिनेतुमादिष्टोऽस्मि तदादिश्यतां वर्णिकापरिग्रहणाय . . . . .

येन च ॥ विवेकेनेव निर्जित्य कर्णं मोहमिवोर्जितम् ।
श्रीकीर्तिवर्मनृपतेर्बोधस्येवोदयः कृतः ॥

नेपथ्ये ॥ पाप शैलूषापशद । कथमस्मासु जीवत्सु स्वामिनो महामोहस्य विवेकसकाशात्पराजयमुदाहरसि ॥

सूत्र ॥ आर्ये ससंभ्रममुपसर्पावः । अवलोक्य ।
उत्तुङ्गपीवरकुचद्वयपीडिताङ्गमालिङ्गितः पुलकितेन भुजेन रत्याः ।
श्रीमान्जगन्ति मदयन्नयनाभिरामः कामोऽयमेति मदघूर्णितनेत्रपद्मः ॥

मद्वचनाच्चायमुपजातकोप इवालक्ष्यते तदस्माकमपसरणमेवेतः श्रेयः ॥ इति निष्क्रान्तौ । प्रस्तावना ॥

ततः प्रविशति यथादिष्टो रत्या सह कामश्च ॥ . . . .

End :

विष्णुभक्तिः (पुरुषमुत्थापयति) उत्तिष्ठ वत्स किन्ते भूयः प्रियमुपहरामि ॥

पुरु ॥ किमतः परं प्रियमस्ति ॥
प्रशान्तारातिरगमद्विवेकः कृतकृत्यताम् ।
नीरजस्के चिदानन्दे पदेऽस्म्यभिनिवेशितः ॥

तथापीदमस्तु
संसारापारसिन्धुप्लवकुशलमहाकर्णधारे मुरारौ
भक्तिर्मुक्तिप्रसारा प्रसरतु जननी सर्वकालं जनस्य ।
किञ्चानन्यप्रकाशं परममलमजं ज्योतिरानन्दसान्द्रं
शान्तात्मानो मुनीन्द्राः प्रमुदितमनसः सन्ततं भावयन्तु ॥

यतः । पूर्वं तावद्विवेकप्रमुखनिजबलैर्निर्जिते सानुबन्धे
मोहेऽस्माकं कुलारौ तदनु समुदिते हन्त वैराग्यसूर्ये ।
शान्तिश्रद्धादियत्नात्पुनरुपनिपदासादितात्संप्रयोगा-
दस्माभिः सत्प्रसादाद्ध्रुवमयमधुना लब्ध एष प्रबोधः ॥

भरतवाक्यम् ॥ पर्जन्योऽस्मिन्जगति महती वृष्टिमिष्टां विधत्तां-
राजानः क्ष्मां गलितविविधोपप्लवाः पालयन्तु ।
तत्त्वोन्मेषाद्विगततमसस्त्वत्प्रसादान्महान्तः-
संसाराब्धिं विषममतुलातङ्कपङ्कं तरन्तु ॥

तथा भवत्विति निष्क्रान्ताः सर्वे ॥ इति षष्ठाङ्कः ॥

Colophon: —प्रबोधचन्द्रोदयं नाम नाटकं सम्पूर्णम् ॥

---

## 27. प्रसन्नराघवम्.

(प्रथमद्वितीयाङ्कौ समग्रौ तृतीयःईषदसमग्रः).

Beginning :—

चत्वारः प्रथयन्तु विद्रुमलतारक्ताङ्गुलिश्रेणयः
श्रेयः शोणसरोजकोमलरुचस्ते शार्ङ्गिणः पाणयः ।
फालेष्वब्जभुवो लिखन्ति युगपद्ये पुण्यवर्णावलीः
कस्तूरीमकरीः पयोधरयुगे गण्डद्वये च श्रियः ॥ . . .

यः खलु जनकराजस्य राज्ञः सदसि हरचापारोपणं नाम रूपकमभिनीय परितुष्टेन तेन राज्ञा समर्पितां रङ्गविद्याधर इति ख्यातिं दयितामिवासादितवान् नटः स पुनरधुना कां दिशमानन्दयति ।

सूत्र ॥ दक्षिणापथं । सा हि ख्यातिरस्य मदीयमेव गुणाराममनामेति जल्पता नटापशदेन केनाप्यपहृता । तेन निजख्यातिं प्रत्याहर्तुं तामेव दिशमनुसृतः । अधुना श्रुतमस्माभिः यत्किल सुकण्ठनाम्ना गायकेन सह मैत्रीं विधाय दाक्षिणात्यस्य वाहिनीपतेस्सदसि रङ्गसङ्गरमुपक्रान्तवानिति.

नटः ॥ अहो महानुपक्रमः.

सूत्र ॥ कीर्तिं मृणालकमनीयभुजामनिंद्र-
चन्द्राननां सितसरोरुहचारुनेत्राम् ।
ज्योत्स्नास्मितां परहृतां दयितामिव त्वां
लब्धुं न कः परममुद्यममातनोति ॥

*　　　*　　　*　　　*

विलासो यद्वाचामसमरसनिष्यन्दमधुरः
कुरङ्गाक्षी बिम्बाधरमधुरभावं गमयति ।
कवीन्द्रः कौण्डिन्यस्स तव जयदेवः श्रवणयो
रयासीदातिथ्यं न किमिह महादेवतनयः ॥

अपिच ॥ लक्ष्मणस्येव यस्यास्य सुमित्रागर्भजन्मनः ।
रामचन्द्रपदाम्भोजे भ्रमद्भृङ्गायते मनः ॥ . . . . .

नटः ॥ नन्वयं प्रमाणप्रवीणोऽपि श्रूयते तदहमिह चन्द्रिकाचण्डातपयोरिव कवितातार्किकत्वयोरेकाधिकरणतामालोक्य कौतुकितोऽस्मि ।

. . . . . . .

सूत्र ॥ यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो
भासो हासः कविकुलगुरुः कालिदासो विलासः ।
हर्षो हर्षो हृदयवसतिः पञ्चबाणश्च बाणः
केषां नैषा कथय कविताकामिनी कौतुकाय ॥ . . .

End :

राघवेण शिशुनापि गरीयान् लीलयैव नमितो हरचापः ।
दूरमुल्लसति चास्य समन्तादम्बरेऽपि गमितो गुणघोषः ॥

## 28. 29. मालतीमाधवव्याख्या.

Beginning :—

ऐन्दव्या कलया वतंसितकचं सौन्दर्यसारास्पदं
कारुण्यामृतपूरपूरितलसल्लीलाकटाक्षाङ्कुरम् ।
विद्युत्कोटिदिनेशकुण्डलरुचिन्यक्कारिभाभासुरं
वन्दे पाशसृणीक्षुचापसुमनोबाणोद्धहं तन्महः ॥

यद्गण्डमण्डलगलन्मदवारिधाराः
कर्णद्वयव्यजनवातविधूतशीर्णाः ।
भक्तान्तरायनिवहा इव सार्यमाणा
भान्तिद्विपेन्द्रवदनं तमुपाश्रयामः ॥

एकाम्रमूलनिलयौ करिभूधरनायकौ ।
काञ्चीपुरीश्वरौ वन्दे कामितार्थप्रसिद्धये ॥

पदवाक्यप्रमाणज्ञो भवभूतिर्महाकविः ।
मालतीमाधवं नाम यद्रूपकमरीरचत् ॥

क्रियते विवृतिस्तस्य भारद्वाजेन धीमता ।
यज्वनः पर्वतेशस्य सूनुना त्रिपुरारिणा ॥

सन्ति यद्यपि चैतस्य व्याख्याः प्राच्यस्तथापि ताः ।
अवक्तव्योक्तिवक्तव्यत्यागाभ्यान्नादृता बुधैः ॥

अतो मितेन वचसा लघ्वी भावप्रदीपिका ।
मालतीमाधवस्येयं रच्यते रसिकप्रियम् ॥

अदृष्टपूर्वव्याख्यानमस्तु वैतन्मनोहरम् ।
अदृष्टदिव्यकान्तानां मानव्य इव कामिनाम् ॥

प्राग्व्याख्यासन्निधाने वा भवत्वस्योपयोगिता ।
भानोरसन्निधाने किं न ग्राह्या करदीपिका ॥

तेषामस्मादृशां वैतदुपयोगि भविष्यति ।
सर्वदा सादरं सन्तः प्रतिगृह्णन्त्वमत्सराः ।
को वा प्रणिधिनि प्रहे . . . . . .

अथवा किन्न एतेन दैन्येन यदि मत्कृतेः ।
विशेषश्चेद्विशेषज्ञः प्रतिगृह्णातु तत्तदा ॥

साहित्याध्वपरिक्षुण्णधियामस्मादृशां भृशम् ।
तादृशा एव जानन्ति विदुरन्ये कथं खलाः ॥

अथ तत्रभवान् भवभूतिः कीर्त्यादिसत्काव्यनिर्माणप्रयोजनप्राप्तये प्रेक्ष्य प्रबन्धभेदं मालतीमाधवं नाम प्रकरणमकार्षीत् ।

* * * *

चापलं यदकारीदं बालेनापि सता मया ।
गुणैकग्राहिणामेव प्रीतयेऽस्तु महात्मनाम् ॥

इति श्रीमद्भारद्वाजकुलतिलकपर्वतनाथयाज्ञिकनन्दनत्रिपुरारिसूरिविरचितायां मालतीमाधवप्रदीपिकायां प्रथमाङ्कविवृतिः समाप्ता ।

जयत्यपूर्वपाण्डित्यमहो कुसुमधन्वनः ।
आविरिश्चप्रपञ्चैकसम्प्रदायप्रवर्तकम् ॥

केनाप्यनुपदिष्टेषु प्रगल्भा येन बालिकाः ।

* * * *

जयन्त्यमृतानिष्यन्दिरसोत्कर्षानुराञ्जिताः ।
मधुरोदात्तगम्भीरा भवभूतिकवेर्गिरः ॥

इति श्रीमद्भरद्वाजकुलतिलकपर्वतनाथयाज्ञिकनन्दनत्रिपुरारिसूरिविरचितायां मालतीमाधवप्रदीपिकायां द्वितीयाङ्कविवरणं समाप्तम् ॥

अनङ्गशासनवधूमङ्गलोज्जीवनौषधम् ।
अभङ्गुरकृपारज्यदपाङ्गामाश्रये शिवाम् ॥

* * * *

भवभूतिवचोगुम्भरसास्वादनचातुरी ।
यदि विद्येत केषाश्चिद्विरलानां विपश्चिताम् ॥

इति भरद्वाज * * यज्वनन्दन| * * तृतीयाङ्कविवरणम् ।

नमामि मदनानन्दविधानविहितादराम् ।
शम्भुवामाङ्गवामाक्षीं कामाक्षीं कामितातये ॥

* * * *

End:

अत्र पानक्रियावर्णनेन बीभत्सरसपोषः प्रादोषिक इति रजनीमुख-समुद्भूतः प्रमोदः प्रकृष्टो हर्षः तेषां रात्रिंचरत्वात् ॥

---

## 30. सुभाषितसुधानिधिः.

Beginning:

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥

अगजाननपद्मार्कं गजाननमहर्निशम् ।
अनेकदन्तं भक्तानामेकदन्तमुपास्महे ॥

ऐश्वर्यमव्याहृतमावहन्तु हेरम्बपादाम्बुजपांसवो नः ।
ये निर्वहन्ति श्रुतिनिर्वहन्तीं सीमन्तसिन्दूरपरागलक्ष्मीम् ॥

उपोद्घातपद्धतिः.

दन्ताग्रं दारयेद्विघ्नान् एकदन्तस्य नः प्रभोः ।
लीलया यस्य संभूतो वलयः कनकाचलः ॥

वीरश्रीकम्पराजोऽस्ति विदुषां सन्वरन्निधिः ।
यत्कीर्तिकामिनीहस्ते ब्रह्माण्डं कन्दुकायते ॥

स्वमुद्रामुद्रितान् कृत्वा प्रायः प्रत्यर्थिपार्थिवान् ।
समुद्राधिपतिर्योऽभूत् नाम्बुधिः शतधापरम् ॥

यस्यातपत्रं विमलं श्यामाकारमलक्षितम् ।
तदन्तर्वर्तिवसुधाच्छायाच्छन्नमिवादरात् ॥

यत्कामकणमध्ये तु बद्धां त्यागाय सद्गुणैः ।
कामधेनुं समालोक्य नृपस्तत्र उपाजनि ॥

यस्य कीर्तिपयोराशौ मग्नं भूमण्डलं महत् ।
तदन्तर्वारिलीनस्य कूर्मस्य श्रियमावहत् ॥

मतिमांस्तस्य राज्ञोऽभून्मन्त्री मायणसायणः ।
यन्मन्त्रेण न सर्पन्ति नित्यं शत्रुबिलेशयाः ॥

यस्य दानाम्भसां पूरैः पङ्किले प्राङ्गणे मुहुः ।
मग्नं पादमिवोद्धर्तुं न शक्नोति नृपः क्वचित् ॥

दानसिंहासनारूढे यस्मिन् लक्ष्म्या सह स्थिरम् ।
तद्भारती च विदुषा जिह्वासिंहासने स्थिता ॥

यन्द्रष्टुं यद्गुणान्वक्तुं श्रोतुं च सततं मुदा ।
शेष एवोचितस्सोऽपि भुजङ्गत्वान्न गण्यते ॥

भारद्वाजान्वयभुवा तेन सायणमन्त्रिणा ।
व्यरच्यत विशिष्टार्थस्सुभाषितसुधानिधिः ॥

धर्मार्थकाममोक्षाङ्कं यत्र पर्वचतुष्टयम् ।
भवत्वपूर्वसन्दर्भं कविकर्णरसायनम् ॥

स कदाचित्समासेऽथ कम्पभूपं कलानिधिः ।
अश्रावयदनूनश्रीर्निश्रेयसकरं परम् ॥

दमशीलं गृहस्थस्य पतिः साध्वी सुशी.... ः ।
अज्ञस्सुजनदुर्जन्तुकलिडाम्भिककर्म च ॥

विदुर्दुर्बुद्धिमृत्यू च धर्मसङ्कर एव च ।

*    *    *    *

प्रसिद्धं यद्वस्तु प्रथयति विना कारणकलां
जगद्भावप्रख्यं निजरसहराद्धारयति च ।
क्रमात्प्रख्योपाख्याप्रसरसुभगं भावयति तत्
सरस्वत्यास्तत्वं कविसहृदयाख्यं विजयते ॥

सरस्वतीविभ्रमदर्पणानां सूक्तामृतक्षीरमहोदधीनाम् ।
सन्मानसोल्लाससुधाकराणां कवीश्वराणां नयति प्रकर्षः ॥

धर्मार्थकाममोक्षेषु वैलक्षण्यं कलासु च ।
करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम् ॥

सूक्तिसङ्ग्रह ऐवस्यात् प्रयोक्तृणां मनोमुदे ।
रत्नैः किमुदयाकीर्णैः परिष्कारार्थिनां फलम् ॥

स्थानस्थानार्पणादेव भासते स तु भूयसा ।
हारे वा विपणौ वा किं रत्नराशिर्विशोभते ॥

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥

बोद्धारो मत्सरग्रस्ताः प्रभवस्स्मयदूषिताः ।
अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम् ॥

कान्तं खलगिरा काव्यं लभते भूयसीं रुचिम् ।
घृष्टं श्वदंष्ट्रया हृद्यं यथा हेमविभूषणम् ॥

सुभाषितं....प्रविशत्यधोगलम्
न दुर्जनस्यार्करिपोरिवामृतम् ।
तदेव धत्ते हृदये सदुर्जनो
हरिर्महारत्नमिवातिनिर्मलम् ॥

ओजो रञ्जनमेव वर्णरचना चित्रा न कस्य प्रिया ।
नानालङ्कृतयो न कस्य मनसस्तोषं समातन्वते ॥
काव्ये किन्तु सतां चमत्कृतिमनास्सूक्तिप्रबन्धाःस्फुटम् ।
तीक्ष्णाग्राज्झटिति श्रुतिप्रणयिनः कान्ताकटाक्षादिव ॥

इति प्ररोचनापद्धतिः

*　　　*　　　*　　　*

End :

इति पूर्वपश्चिमसमुद्राधीश्वराऱिरायविभालश्रीकम्पराजमहाप्रधान-भरद्वाजवंशमौक्तिकमायणरत्नाकरसुधाकरमाधवकल्पतरुसहोदरसायणार्य-विरचिते सुभाषितसुधानिधावर्थपर्व सम्पूर्णम् ॥

---

31. अलङ्कारकौस्तुभः (सव्याख्यः).

Beginning :

यन्नाभीजलजोदितः समजनि स्रष्टाखिलानां पुमान्
यत्पादाम्बुजसङ्गिनी सुरधुनी जाता जगत्पावनी ।
यद्वक्षोभवनेन्दिरा परिणता विश्वाधिकैश्वर्यदा
सोऽयं विश्वमभीप्सितं प्रदिशतु श्रीपद्मनाभोऽनिशम् ॥

अत्र प्रथमं प्रारिप्सितग्रन्थनिर्विघ्नपरिसमाप्तये मङ्गलमाचरितं तस्य च व्यवहारायालङ्कारकौस्तुभ इति नाम निबध्नन् यत्करोषीत्यादिभगवद्वचनेन तं ग्रन्थं कौस्तुभरत्नत्वेनाध्यवस्यन् वर्णनीयाय भगवते श्रीपद्मनाभाय समर्थयति ॥

श्रीकञ्जनाभकरुणाकलशाब्धिजाता-
लङ्कारकौस्तुभममूल्यसुवर्णकान्तम् ।
तद्भूरिभासुरगभीरगुणाभिरामं
तस्मै पुनर्भगवतेऽद्य समर्पयामि ॥ 1 ॥

न यद्वचश्चित्रपदमित्यादिश्रीमद्भागवतवचनपर्यालोचनया यथासामोदमपि कुसुमं गुणग्रथनमन्तरेण कण्ठे न धार्यते तद्वत्काव्यमपि श्रीपद्मनाभस्य गुणवर्णनेन विना कण्ठे विबुधा न धारयन्तीत्याह ।

नानालङ्कृतिकेसरैर्नवरसस्यन्दैरमन्दस्फुरत्
व्यङ्ग्यामोदभरैर्यदुज्ज्वलतरं काव्यं प्रसूनं नवम् ।
तद्वाराजदुदारनिर्जरगुणग्रामाभिरामं न चेत्
सानन्दं सततं कथन्नु विबुधैः कण्ठेषु संधार्यते ॥

ननु ब्रह्मादीनामपि श्रीपद्मनाभगुणाः वर्णयितुमशक्या इति तत्राल्पमतेः कथं प्रवृत्तिरित्यत आह ॥

याता यद्गुणलेशलेशकथने ब्रह्मादयो मूकतां
कोऽहं तत्र तथापि सा हि करुणा वाचालयत्येव माम् ।
कोणे क्वापि सरोजनाभममितब्रह्माण्डभाण्डावली-
वीथीविष्फुरितोदरं परिममौ तं भिक्षुदण्डेन या ॥

तथा च या कृपा यथा परिमेयतनुं भगवन्तं श्रीपद्मनाभमल्पमपि भिक्षुदण्डं मानसाधनं कृत्वा परिमातुं प्रवृत्ता तथा साल्पमतिमपि मां तव साधनं कृत्वा स्तोतुं स्वयमेव प्रवृत्तेति भावः । तस्माद्भगवतः श्रीपद्मनाभस्य गुणवर्णनेन तदङ्गत्वेन तद्भक्ताग्रेसरश्रीवञ्चिपालरामवर्मकुलशेखरनृपगुणवर्णनेन च भवतीं तोषयामीति भारतीं प्रार्थयते ॥

तन्मत्सूक्तिगुणैः शुभां गुणमणीनम्भोजनाभस्य तान्
सङ्ग्रथ्याहमलङ्करोमि भवतीं हारैर्नवैर्भारति ।
तैरेव ग्रथितैस्तदेकशरणश्रीरामवर्मावनी-
पालस्वर्द्रुमकीर्तिसूननिकरैरप्यन्वहं भासुरैः ॥

एवं भारतीमाराध्य कवितारसज्ञानभिष्टौति ॥

सारस्यं कतिचित्प्रगल्भकवयः सारस्वतं तत्त्वतः
प्रज्ञातुं प्रभवन्त्यपारकृपया देव्या गिरां नापरे ।
कूजत्कोकिलशारिकाशुकमुखास्तिष्ठन्त्यनेकेन किं
नीरक्षीरविवेचने पुनरमी हंसाः परं विश्रुताः ॥

नायकनिवासस्थानमभिवर्णयति ॥

प्रफुल्लकमलाञ्चितं प्रथितराजहंसास्पदं
प्रसन्नरसरागवत्कविकुलं प्रपन्नार्तिहम् ।
निरन्तरनिषेवितं जयति निस्तुलैर्निर्जरै-
रनन्तनगरीति तन्नलिननाभधामाद्भुतम् ॥

तत्र वर्णनीयं श्रीपद्मनाभं निर्दिशति ॥

श्रीवैकुण्ठपुरीकवाटपटलीमौनं समुत्पादयन्
भव्यानन्तपुरीसृतीर्निबिडयन् सेवापरैर्निर्जरैः ।
धून्वन् योगविदां मरुन्नियमनश्रान्ति सकृत्पश्यता-
मध्यास्ते परमादिशन्निजपदं यत्पद्मनाभोऽनिशम् ॥

एवं नायकं निर्दिश्य तद्भक्ताग्रेसरश्रीवञ्चिपालरामवर्मकुलशेखर-सार्वभौमगुणवर्णने सङ्गतिं प्रदर्शयन्नाह ॥

श्रीपद्मनाभपदपङ्कजसक्तचित्तः
तन्वन्कलिं कृतयुगं निरवद्यनीत्या ।
विश्वंभरामवति तत्पुरमत्य धारः
श्रीरामवर्मकुलशेखरसार्वभौमः ॥ . . . . .

End:

राराजन्मधुराधरां प्रविलसच्चोलां कनत्कुन्तलां
काश्मीराङ्गविभूषणातिललितां काञ्चीगुणालङ्कृताम् ।
क्षोणीं श्रीरघुरामवन्निरुपमां रत्नाकरोर्मिका-
जालान्तामनुरञ्जयत्वनुदिनं श्रीरामवर्मप्रभुः ॥

श्रीमद्वञ्जिकुलाम्बुधिर्विजयतामाचन्द्रतारं बुधा-
धारा वञ्जिधरा श्रियानुपमया देदीप्यतामन्वहम् ।
सत्कल्याणकवेः कृतिर्वितनुतामानन्दमन्तः सतां-
चित्ते खेलतु रामवर्मनृपतेः श्रीपद्मनाभः सदा ॥

Colophon :—इति श्रीमत्पेरूरुकुलजलधिचन्द्रश्रीरामचन्द्रचरणारविन्दमिलिन्दायमानमानसगोपालविपश्चित्पौत्रेण सुब्रह्मण्यसुधीमणिपुत्रेण कल्याणसुब्रह्मण्यसूरिणा विरचिते अलङ्कारकौस्तुभे संसृष्टिप्रकरणम् ॥

---

## 32. कविकल्पलता.

Beginning :

गङ्गावारिभिरुक्षिताः फणिफणैरुत्पल्लवास्तच्छिखा-
रत्नैः कोरकिताः सुधांशुकलया स्मेरैकपुष्पश्रियः ।
आनन्दाश्रुपरिप्लुताक्षिहुतभुग्धूमैर्मिलद्दोहदा-
नल्पं कल्पलताः फलं ददतु वोऽभीष्टं जटा धूर्जटेः ॥

मालवेन्द्रमहामात्यश्रीमद्वाग्भटनन्दनः ।
देवेश्वरः प्रतनुते कविकल्पलतामिमाम् ॥ 2 ॥

प्रतिभाभावितात्मानः कवित्वं के न कुर्वते ।
अन्यत्र कविताधानकुशला विरलाः पुनः ॥ 3 ॥

यदन्यैर्वर्त्म न क्षुण्णं तत्र संचरतो मम ।
पदे पदे प्रस्खलतः सन्तस्सन्त्ववलम्बनम् ॥ 4 ॥

कविशिक्षाशतं वीक्ष्य कवीन्द्रानुपजीव्य च ।
निबद्धेयं मया धीरास्त्वरितश्लोकसिद्धये ॥ 5 ॥

सुपुष्परम्यस्तबका सदालिपरिशीलिता ।
कविकल्पलता सेयममला परिशील्यताम् ॥ 6 ॥

शब्दश्लेषकथार्थाख्याश्चत्वारस्तबका इह ।
ते चतुः पञ्चषट्सप्तकुसुमैरन्विताः क्रमात् ॥ 7 ॥

तत्राद्यस्तबके छन्दोऽभ्यासः सामान्यशब्दकः ।
वर्णस्थितिरनुप्रासः कुसुमानि यथाक्रमम् ॥ 8 ॥

छन्दो ऽभ्यासः प्रसूनेऽत्र नेत्रभूते विपश्चिताम् ।
कथ्यन्ते केऽपि शब्दा यैश्छन्दो मन्दोपि विन्दति ॥ 9 ॥

श्रीलक्ष्मीः कमला पद्मालया च हरिवल्लभा ।
दुग्धाब्धिनन्दिनी क्षीरसागरापत्यमित्यपि ॥ 10 ॥

क्षीरपाथोधितनयेत्येवमेकाक्षरादिकम् ।
आदौ साध्यं पदं स्थाप्यं शेषं कुर्याद्विशेषणैः ॥ 11

विशेष्यो वर्णकाकाराधाराधेयक्रियागुणैः ।
सादृश्यपरिवाराद्यैः क्रियते सविशेषणैः ॥ 12 ॥

यथा सुधांशुर्धवलोऽतिवृत्तः कान्तान्तरिक्षो हरिणं दधानः ।
महत्तमोघ्नो जनतापहारी मृगेन्द्रवद्राजतिऋक्षराजः ॥ 13 ॥

End :

आदिक्षान्तलिपौ कादिक्षान्तशब्दगवेषणे ।
चित्रानुप्रासयमकशब्दनिश्चयकृद्भवेत् ॥

यथा कल खल गल चल छल जल तल स्थल दल नल पल बल भल मल हल कीर चीर तीर धीर नीर वीर सीर हीर क्षीर एवमन्यत्रापि ॥

यत्किञ्चिदत्र न मया गदितं ग्रन्थस्य गौरवत्रासात् ।
मत्कृतचन्द्रकलापेऽमलमतिभिस्तद्बुधैर्ज्ञेयम् ॥

Colophon :—इति कविकल्पलतायांप्रथमस्तबके वर्णानुप्रासो नाम तुरीयं कुसुमम् ॥ समाप्तश्च प्रथमस्तबकः ॥

उद्दिष्टवर्णनं वर्णः प्रकीर्णः सङ्ख्यया सह ।
रूढादिश्चेति पञ्चेह कुसुमानि यथाक्रमम् ॥
श्वैत्यादिभिर्विभिन्नस्योद्दिष्टवस्तुद्वयस्य यत् ।
अभेदः क्रियते श्लेषात्तत्स्यादुद्दिष्टवर्णनम् ॥
सितकृष्णौ विधुहारी शितिताराभ्रकनागराजघनसाराः ।
रामपयोराश्यर्जुनसिंही जानन्ति चन्द्रहासाद्याः ॥
विधुश्चन्द्रो विष्णुश्च . . . . . .

End :

जलजादिषु पूर्वपदेषु सरोजमुख्येषु चोत्तरपदेषु ।
सुरपतिसमेषु चोभयपदेषु पर्यायपरिवृत्तिः ॥
इति परिवृत्तिसहाये योगात्ते यौगिकाः शब्दाः ।
परिवृत्तिसहाये ते मिश्रा गीर्वाणतुल्यास्तु ॥

Colophon :—इति कविकल्पलतायां द्वितीये श्लेषस्तबके रूढयौगिकमिश्राख्यं पञ्चमं कुसुमम् ॥ समाप्तश्चायं स्तबकः ॥

अथ राजेक्षणं गङ्गास्तुतिर्भगवदीरणम् ।
विप्रालापस्तटाकादिवर्णनं वादितर्जनम् ॥
इति यत्र निगद्यन्ते क्रमेण कुसुमानि षट् ।
तं वदामि कथाकल्पं सुधाकल्पं समासतः ॥
अर्थिप्रत्यर्थिनोर्यत्र विमतिः सा कथा द्विधा । . . . .

End :

लक्षणे मम दक्षत्वं साहित्ये सम्मता मतिः ।
तर्के कर्कशतात्यन्तं क्व शास्त्रे नास्ति मे श्रमः ॥
इत्थं सुव्यधकैर्वाक्यैरन्यदर्पान्समुद्धरेत् ।
अर्थं च शामयेद्वादियुक्तियुक्तैर्वचःक्रमैः ॥

Colophon :—इति कविकल्पलतायां तृतीयस्तबके वादितर्जनं नाम षष्ठं कुसुमम्। समाप्तश्चायं स्तबकः ।

अर्थोत्पादोऽद्भुतं चित्रं सादृश्यं रूपकादिकम्।
समस्यापूरणोपायः समस्या च यथाक्रमम् ॥
मृण्मयकार्पासमयद्रुमसंभवधातुचर्मदृषदाश्च ।
वाच्याक्लेशसहत्वात् तत्तत्स्थानादिसंप्राप्तिः ॥ . . .

End :

यस्यादेशमवस्थितस्त्रिदिवराण्णूनं दिवं रक्षति
प्रस्तावे विनिहत्य यश्च दितिजानादत्त लोकत्रयं ।
तिग्मांशुं क्षमदब्ज ते हृदि सतामेनोक्षयाविष्कृतं
तं मोक्षाय भजे प्रजापतिंकृतातिथ्यक्रियं सन्ततम्॥

स जनककविनामाङ्कित षडारचक्रबन्धः . . . .

इति कविकल्पलतायां चतुर्थस्तबके चित्रं नाम तृतीयं कुसुमम्।

---

33. कुवलयानन्दः अप्पयदीक्षितकृतः.

Beginning :—

अमरीकबरीभारभ्रमरीमुखरीकृतम्।
दूरीकरोतु दुरितं गौरीचरणपङ्कजम्॥
परस्परंतपस्सम्पत्फलायितपरस्परौ ।
प्रपञ्चमातापितरौ प्राञ्चौ जायापती स्तुमः ॥

उद्घाट्य योगकलया हृदयाब्जकोशं
धन्यैश्चिरादपि यथारुचिं गृह्यमाणः ।
यः प्रस्फुरत्यविरतं परिपूर्णरूपः-
श्रेयः स मे दिशतु शाश्वतिकं मुकुन्दः ॥

अलङ्कारेषु बालानामवगाहनसिद्धये ।
ललितः क्रियते तेषां लक्ष्यलक्षणसङ्ग्रहः ॥
येषां चन्द्रालोके दृश्यन्ते लक्ष्यलक्षणश्लोकाः ।
प्रायस्त एव तेषामितरेषां त्वभिनवा विरच्यन्ते ॥

उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः ।
हंसीव कृष्ण ते कीर्तिः स्वर्गङ्गामवगाहते ॥

यत्रोपमानोपमेययोः सहृदयहृदयाह्लादकत्वेन चारु सादृश्यमुद्भूततयोल्लसति व्यङ्ग्यमर्यादां विना स्पष्टं प्रकाशते तत्रोपमालङ्कारः । हंसीवेत्युदाहरणं । इयं च पूर्णोपमेत्युच्यते । हंसी कीर्तिः स्वर्गङ्गावगाहनमिव शब्दश्चेत्येतेषामुपमानोपमेयसाधारणधर्मोपमावाचकानां चतुर्णामप्युपादानात् ।

यथा वा ॥ गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेडाविवेश्वरः ।
शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति ॥

अत्र यद्यपि . . . . . . . . .

End:

समप्राधान्यसङ्करो यथा ॥
अवतु नस्सरितस्तुरगावलिः
समतिलङ्घिततुङ्गपयोधरा ।
स्फुरितमध्यगतारुणनायका
मरतकैकलतेव नभःश्रियः ॥

---

34. चित्रमीमांसा.

Beginning:—

अभिवाद्य चन्द्रशेखरमाद्यं गौरीसखं परं ज्योतिः ।
वितनोमि विपुलविषयां विशदार्थामर्थचित्रमीमांसाम् ॥

काव्यं तावत्त्रिविधं ध्वनिगुणीभूतव्यङ्ग्यचित्रभेदात् । यत्र वाच्यातिशायि व्यङ्ग्यं स ध्वनिः ।

यथा ॥ स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः ॥

अत्र तपस्यन्त्याः देव्याः देहोपरि पततां प्रथमवृष्टिबिन्दूनां क्रियास्वभाववर्णनेन देव्यास्समाध्युचितावस्थानाभिव्यक्तिद्वारा चिरनिदाघतप्तदेहोपरि पतनेन सुखपारवश्यसम्भ्रमहेतौ प्रथमवृष्टावप्यविहितसमाध्यवस्था व्यज्यते । तथा हि. ।

नासाग्रन्यस्तनयनः संवृतास्यः सनिश्चलः ।
ध्यायीत मननादेव पुरोऽवष्टभ्य चाग्रतः ॥

इति समाध्यवस्थानमाहुः । तत्र पक्ष्मसु संस्थिता इत्यनेन नासाग्रन्यस्तनयनतारूपमर्धनिमीलनं व्यज्यते सर्वथोन्मीलने पक्ष्मणामूर्ध्वाग्रत्वेन सर्वथा निमीलने तेषामधोग्रत्वेन च तेषु जलबिन्दूनां स्थित्यसंभवात् पक्ष्मभ्यश्च्युतानां तेषामास्ये अप्रविश्य अधरोष्ठे निपत्य ततश्च्युतिकथनेन संवृतास्यत्वं व्यज्यते ततश्च्युतानां स्तनोत्सेधनिपतनादिवर्णनेन तूरोवष्टम्भः अलसावनतावस्थाने हि स्तनयोरन्तस्संकुचिताकारतया तदुत्सेधयोस्तेषां पतनं न स्यात् कथंचित् तयोः पतित्वा वलित्रयं प्राप्तानामपि वलीषु तिर्यगेव गमनं स्यात् न नाभिदेशप्राप्तिः नाभौ च संवृतायां प्रवेशो न स्यात् पक्ष्माधरादिक्रमकथनेन च निश्चलत्वं व्यज्यते मुखादिचलने सति पक्ष्मपतितानां तेषामधरपयोधरादिक्रमेण पतनासंभवात् . . . .

End :

एवमपि विद्वन्मानसहंसेत्यादावपि श्लिष्टरूपके अतिव्याप्तिः। रूपके ताद्रूप्यारोपमात्रं नत्वतिशयोक्तिवदभेदाध्यवसाय इति कल्पनाद्रूपक-

लक्षणविचार एव निरस्तासारूप्यनिबन्धेनाप्रस्तुतप्रशंसोदाहरणेषु चाव्याप्तिः ।

Colophon:—इति श्रीमदप्पयदीक्षितकृतौ चित्रमीमांसायामतिशयोक्त्यलङ्कारप्रकरणम्.

---

### 35. प्रतापरुद्रीयम्.

Beginning:

विद्याकैरवकौमुदीं श्रुतिशिरः सीमन्तमुक्तामणिं
दारान् पद्मभुव स्त्रिलोकजननीं वन्दे गिरां देवताम् ।
यत्पादाब्जनमस्क्रियाः सुकृतिनां सारस्वतप्रक्रिया
बीजन्यासभुवो भवन्ति कविताना्यौकजीवातवः ॥

पूर्वेभ्यो भामहादिभ्यः सादरं विहिताञ्जलिः ।
वक्ष्ये सम्यगलङ्कारशास्त्रसर्वस्वसङ्ग्रहम् ॥

चिरेण चरितार्थो ऽभूत् काव्यालङ्कारसङ्ग्रहः ।
प्रतापरुद्रदेवस्य कीर्तियेन प्रकाश्यते ॥

रसप्रधानाः शब्दार्था गुणालङ्कारवृत्तयः ।
रीतयश्चेयतीशास्त्रप्रमेयं काव्यपद्धतिः ॥

. . . . . . तथा चोक्तं काव्यप्रकाशे ।

काव्यं यशसेर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥ इति

* * * *

प्रतापरुद्रदेवस्य गुणानाश्रित्य निर्मितः ।
अलङ्कारप्रबन्धो ऽयं सन्तः कर्णोत्सवोऽस्तु वः ॥

काकतीयनरेन्द्रस्य यशो भूषयितुं कृता ।
विद्यानाथकृतिश्चेयं स्वयं तेन विभूष्यते ॥

अतः परं (गुणालङ्कारादिविषयेषु भामहोद्भटरुद्रभट्टदण्ड्यादिभिः कथिताः बहवः श्लोकाः एतस्मिन्ग्रन्थे उदाहृताः).

End:

अत्र प्रतिपक्षबलार्णव इत्युपमाया व्याकुलीकृतसत्त्व इति बाधकं प्रमाणम् । उपमितं व्याघ्रादिभिः सामान्याप्रयोग इत्यनुशासनेन सामान्यप्रयोगस्योपमाबाधकत्वात् । अतःपरिशेष्याद्रूपकालङ्कारः । एवं यथा सम्भवमन्येषामलङ्काराणां संसृष्टिसङ्करौ बोद्धव्यौ तत्र तत्र प्रबन्धेषु ।

Colophon:—इति विद्यानाथमहोपाध्यायकृतौ प्रतापरुद्रयशोभूषणे प्रतापरुद्रीयं नामालङ्कारशास्त्रं समाप्तम् ।

---

36. शृङ्गारमञ्जरी प्रथमपरिच्छेदः.

Beginning:

श्रीमदादीश्वरं नत्वा सोमवंशभुवार्थितः ।
रायाख्यजैनभूपेन वक्ष्ये शृङ्गारमञ्जरीम् ॥

अष्टाविंशं शतं तस्याः प्रमाणं श्लोकपद्यतः ।
अनुष्टुप्संख्या पञ्चचत्वारिंशं शतं मतम् ॥

विदोषं सगुणं रीतिरसालङ्कारगं मुदे ।
काव्यं कुर्वीत शब्दार्थरचनानिपुणः कविः ॥

वर्णभेदं विजानीयात् कविः काव्यसुखे पुनः ।
सद्वर्णं सद्गणं पद्यात् संपत्सन्तानसिद्धये ॥

वदन्ति देवताशब्दा भद्रादीनि जये तु ते ।
गणाद्वा वर्णतो वापि नैवनिन्द्याः कवीश्वरैः ॥

अथ पददोषानाह ॥

अलक्षणं श्रुतिकटु व्याहतार्थमनर्थकम् ।
नेयार्थमप्रसिद्धं च ग्राम्यं चासम्मतं पदम् ॥
शब्दशास्त्रविरुद्धत्वादलक्षणमिदं यथा ।
कान्ततोषाम्बुधिः कान्तामुखचन्द्रेण वर्द्धते ॥

* * * *

End :

अर्थश्चतुर्विधो मुख्यो लक्ष्योव्यङ्ग्यश्च गौणकः ।
यथा घोषोऽस्तिं गङ्गायामित्यादिषु परीक्षकः ॥
मुख्यो गङ्गेति लक्ष्यस्तु तटः शाद्वलवल्लरी ।
गुल्मशीतादिकं व्यङ्ग्यो गौणोऽग्निर्बालकस्त्विति ॥

Colophon :—इति शृङ्गारमञ्जर्यां प्रथमः परिच्छेदः ।

द्वितीयःपरिच्छेदः.

प्रसादः कान्तिरौदार्यं माधुर्यं समतौजसी ।
अर्थव्यक्तिः समाधिश्च श्लेषश्च सुकुमारता ॥
द्रागर्थार्पकता यत्र प्रसादः कथिता यथा ।
राजहंसीव भासि त्वं यान्त्यायान्ती च लीलया ॥

* * * *

End :

अत्यन्तसुवयःकामालीनेव प्रियवक्षसि ।
प्रगल्भा सुरतारम्भेऽप्यस्वाधीनमना यथा ॥
गाढाश्लेषप्रलीनस्तनबिसजयुगोद्भिन्नरोमोद्गमाढ्या
सान्द्रस्नेहातिरेकप्रगलितविरणत्काञ्चिसुश्रोणिवस्त्रा ।
मा मालं मेति दैन्यप्रलपितवदना किं मृता किं प्रसुप्ता
. . ये किं सुप्रविष्टा मनसि समुषिता वेति सा रंरमीति ॥

दृक्प्रीतिमनःसक्ती सङ्कल्पो जागरस्तथा तनुता ।
अरतिर्लज्जात्यागो मोहो मूर्च्छा मृतिर्दशावस्थाः ॥

Colophon:—इति द्वितीयःपरिच्छेदः ।

तृतीयःपरिच्छेदः.

महादभ्रमध्ये महादभ्रमध्ये प्रिये पश्य चन्द्रं तवास्यायमानम् ।
प्रिये पश्य चन्द्रं महादभ्रमध्ये महादभ्रमध्ये तवास्यायमानम् ॥
प्रिये पश्य चन्द्रं तवास्यायमानं महादभ्रमध्ये महादभ्रमध्ये ।
महादभ्रमध्ये प्रिये पश्य चन्द्रं महादभ्रमध्ये तवास्यायमानम् ॥

एवमसंयुतपादत्रिकं योज्यम् ।

श्लोकपादपदावृत्ति वर्णावृत्ति युता युता ।
भिन्नवाक्यादिमध्यान्तविषया यमकं हि तत् ॥ . . .

अथार्थालङ्कारानाह ।

उपमा रूपकं जातिर्भ्रान्तिमान् हेतुसंशयौ ।
प्रतिवस्तूपमाक्षेपो दृष्टान्तस्तुल्ययोगिता ॥

* * * *

End:

आशीरभिमतार्थेषु प्रशंसा कथिता यथा ।
सर्वज्ञः सर्ववागीशः सार्वो ब्रह्मास्तु वो मुदे ॥
उक्तालङ्कृतिभिर्मिश्रः सङ्करः कथितो यथा ।
त्वं राजकरसंस्पर्शाच्चन्द्रकान्तशिलायसे ॥
. . . लदेवीति ख्याता शीलविभूषणे ।
तत्पुत्रः कामिरायाख्यो राय इत्येव विश्रुतः ॥

तद्भूमिपालपाठार्थमुदितेयमलङ्क्रिया ।
संक्षेपेण बुधैर्ह्येषा यद्यत्रास्ति विशोध्यताम् ॥

Colophon :—इति शृङ्गारमञ्जरीनामालङ्कारे तृतीयः परिच्छेदः ।

श्रीसेनगणाग्रगण्यतपोलक्ष्मीविराजिताजिनसेनदेवयतीश्वरविरचितः शृङ्गारमञ्जरीनामालङ्कारः ।

---

37. भेदधिक्कारः.

Begining.

वेदान्तवनसञ्चारि नीलाचलगुहेशयम् ।
ज्योतिर्विराजते ध्वस्तमायावरणवारणम् ॥

किं न त्वं नरसिंह एव यदि वा नाहं न नोचेत्कथं
बन्धो मय्यखिलेश्वरे त्वयि विभो किं नास्ति मत्तः परम् ।
भूयादर्थवदात्मबन्धहर इत्याद्यं वचोऽपौरुषं
न त्वं ना तदहं त्वमेव नृहरे भुयासमात्मेस्त्वयि ॥

हृदयालयमालम्ब्य करुणारससुन्दरम् ।
गुरूणां चरणाम्भोजं कुर्वे भेदस्यधिकृतिम् ॥

अन्तःकरणातिरिक्ताहमिति प्रतीयमानो जीवः पारमान्न भिद्यते चेतनत्वात् पदार्थत्वात् ब्रह्मवत् विपक्षे भेदग्राहकप्रमाणाभावादभेदश्रुत्यप्रामाण्यप्रसङ्गाच्च नाप्रयोजकत्वम् ॥ तथा हि ॥

मानाभावादयुक्तेश्च न भिदेश्वरजीवयोः ।
जीवानुमुचितां चैव नात्मनो न परस्परम् ॥

अथ कथं भेदे प्रमाणाभावः नाहमीश्वर इत्येतत् प्रत्यक्षं सर्वसम्मतम् । न भ्रान्तिः । बाधाविरहात् न वा तद्धेत्वसंभवः । अस्ति खलु अस्मदादिप्रत्यक्षं नाहमीश्वर इति तच्चाबाधितमहमीश्वर इत्यप्रतीतेः ननु न ताव-

दिदं चक्षुरादिजन्यं आत्मनि तदसंभवात् मनसश्च प्रमाणान्तरसहकारिणः पृथक्प्रमाणत्वायोगात्। अतः क्लृप्तप्रमाणाभावात् सा भ्रान्तिरिति चेन्न सुखाद्युपलब्धेः प्रमाणजन्यतया मनस एव तत्प्रमाणत्वेन भेदस्यापि तत्प्रमाणकत्वात् . . . . . . . . . . .

End:

तस्मात्तत्त्वमसीत्यादेः सत्यज्ञानसुखात्मकं ।
जीवो ब्रह्मेति संसिद्धमद्वैतं ज्योतिरस्तु मे ॥

आस्तामन्यप्रमाणत्वमभेदे सर्ववस्तुनः ।
भेदप्रमाणमेवैतदद्वैतं साधयेत्स्फुटम् ॥

गुरुचरणसकाशादुद्धृतं निर्गतं यत्-
द्विगुणमनुगुणं वा वीक्षतां तत्क्षमात्मा ।
अपि विसृजति कश्चित्काचमालावमत्या
शतमखमणिमालां शारदाकाशनीलाम् ॥

Colophon:—इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमज्जगन्नाथाश्रमपूज्यपादशिष्यश्रीमन्नृसिंहाश्रमिविरचितो भेदधिक्कारः समाप्तः ।

---

37-a. भेदधिक्कारसत्क्रिया (असमग्रा).

Beginning:

मृषा मायाशक्त्यावृतमहिमनि ब्रह्मणि परे
जगज्जालं जातं स्फुरति विततीवोरुनगरम् ।
विरिञ्चश्रीशेशत्रिदशनरतिर्यग्गतभिदा
कुतोऽतो भूमाहं निरवधि सदानन्दघनचित् ॥

काशते कलितं यस्य पदं वैदिकमस्तकैः ।
भक्तमुक्तचै समीहन्तं तं नृसिंहं गुरुं भजे ॥

गम्भीरभावभारेण दुर्वहा गौरवी कृतिः ।
तथापि भेदधिक्कारसत्क्रियां श्रद्धयारभे ॥

यद्यपि श्रुतिस्मृतीतिहासपुराणागमैः क्रियासमभिहारेण जगन्निदाने सर्वज्ञे परमात्मनि सजातीयादिसमस्तभेदो निन्दितो निषिद्धश्च यद्यपि चात्र भवद्भिर्बादरायणभगवत्पादादिभिः पूर्वाचार्यैरारम्भणादिन्यायतोऽपि भेदसत्ता निराकारि । तथापि केचित्स्वोत्प्रेक्षापरिकल्पितपरिभाषिकयुक्तिकलापाकुलीकृतान्तःकरणाः भेदसत्तां संभावयन्तो न श्रुत्यादिसिद्धशुद्धाद्वितीयचिदात्मनि श्रद्धां न बध्नन्ति अतस्तन्मोहशान्तये समस्तभेददुर्निरूपत्वप्रकटनाय ग्रन्थमारभमाणस्तत्परिसमाप्त्यादिफलकमीश्वरतत्त्वानुस्मरणरूपं मङ्गलं मनसानुष्ठितं शिष्यशिक्षार्थं प्रकठयन् प्रकरणविषयादिकं च सूचयन् स्मृतवस्तुस्वरूपं सलक्षणप्रमाणं निर्दिशति वेदान्तेत्यादिना । ज्योतिः चित्प्रकाशः विराजते विविधनामरूपप्रपश्चात्मना दीप्यते अनेन अध्यस्तसमस्तप्रपश्चात्मत्वापत्या तदधिष्ठानत्वं तत्तदवच्छिन्नस्फूर्तिमत्तया च सर्वज्ञत्वमिति तटस्थलक्षणद्वयं सूचितं ज्योतिःपदोपात्तस्य चित्प्रकाशस्य सदानन्दात्मत्वेन श्रुतिन्यायाभ्यां निर्धारितत्वेन, सच्चिदानन्दरूपं स्वरूपलक्षणमुक्तम् . . . . . . . . . . .

* * * *

End:

प्रागुक्तं स्मारयति अप्रसिद्धीति धर्मिज्ञानसाध्येच्छाया इत्यत्र सिंहावलोकेनन्यायेन । प्रतिपादयति इष्टसाधनत्वेति आरोपात्प्राक्तस्यानुपस्थितत्वेन तद्गतेष्टसाधनत्वस्याप्यनुपस्थितिः तदुपस्थित्यधीनेच्छाया एव प्रागुक्त संभवान्न तस्यास्तद्धेतुत्वमित्यर्थः । नन्वाहार्यारोपे तदिच्छाया अहेतुत्वे दोषान्तरस्याप्यभावात्क्वापि न स्यात् ततश्च प्रतीकोपासनादीनामप्यसम्भवात्तद्विधीनामप्रामाण्यापात इत्याशङ्क्याह न चैवमिति ॥

38. पञ्चदशप्रकरणव्याख्या (असमग्रा).

Beginning:

नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ।
प्रत्यक्तत्त्वविवेकस्य क्रियते पददीपिका ॥

प्रारिप्सितस्य ग्रन्थस्याविघ्नेन परिसमाप्तिंप्रचयगमनाभ्यां शिष्टाचारं परिप्राप्तमिष्टदेवतागुरुनमस्कारलक्षणं मङ्गलाचरणं स्वेनानुष्ठितं शिष्यशिक्षार्थं श्लोकेनोपनिबध्नाति । अर्थाद्विषयप्रयोजने च सूचयति ॥

मू ॥ नमः श्रीशङ्करानन्दगुरुपादाम्बुजन्मने ।
सविलासमहामोहग्राहग्रासैककर्मणे ॥

शं करोतीति शङ्करः परमात्मा एष ह्यानन्द इति श्रुतेः आनन्दः निरतिशयप्रेमास्पदत्वेन परमानन्दरूपः प्रत्यगात्मा शङ्करश्चासौ आनन्दश्चेति शङ्करानन्दः प्रत्यगभिन्नः परमात्मा स एव गुरुः परिपक्वमलाये (?) तानुत्सादनहेतुशक्तिपातेन योजयति परे तत्वे स दीक्षयाचार्यमूर्तिस्थ इत्यागमात् श्रीमांश्चासौ शङ्करानन्दगुरुश्चेति गन्धद्विप इत्यादिवत्समासः . . . . . , . . . . . . .

अत्र शङ्करानन्दपदद्वयसामानाधिकरण्येन जीवब्रह्मणोरेकत्वलक्षणो विषयः सूचितः जीवस्य ब्रह्मरूपतया अपरिच्छिन्न . . . . लक्षणं प्रयोजनश्च सूचितम् सविलासमहामोहेत्यादिना । निश्शेषानर्थनिवृत्तिलक्षणं प्रयोजनमुखत एवाभिहितम् । इदानीमवान्तरप्रयोजनकथन पुरस्सरं ग्रन्थारम्भं प्रतिजानीते ॥

मू ॥ तत्पादाम्बुरुहद्वन्द्वसेवानिर्मलचेतसाम् ।
सुखबोधाय तत्त्वस्य विवेकोऽयं विधीयते ॥

तस्य गुरोः पादावेवाम्बुरुहे कमले तयोर्द्वन्द्वं तस्य सेवया परिचर्यया स्तुतिनमस्कारादिलक्षणया निर्मलं रागादिरहितं चेतः अन्तः-

करणं येषां ते तथोक्ताः तेषां सुखावबोधाय अनायासेन तत्त्वज्ञानोत्पादनायायं वक्ष्यमाणः प्रकारः तत्त्वस्यानारोपितस्वरूपस्याखण्डं सच्चिदानन्दं महावाक्येन लक्ष्यत इति वक्ष्यमाणस्य विवेक आरोपितात्पञ्चकोशलक्षणाज्जगतो विवेचनं विधीयते क्रियत इत्यर्थः ॥

* * * *

Colophon :—इति श्रीपरमहंसपरिव्राजकाचार्यश्रीभारतीतीर्थविद्यारण्यमुनिवर्यकिङ्करेण श्रीरामकृष्णविदुषा विरचिता तत्त्वविवेकस्य पददीपिका समाप्ता ॥

नत्वाश्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ।
भूतपञ्चविवेकस्य व्याख्यानं क्रियते मया ॥

* * * *

मू ॥ तदद्वैतं श्रुतं यत्तत् पञ्चभूतविवेकतः ।
बोद्धुं शक्यं ततोऽभूतपञ्चकं प्रविविच्यते ॥

* * * *

इति श्रीपरम . . महाभूतस्य तात्पर्यदीपिका समाप्ता ॥

* * * *

मू ॥ गुहा हितं ब्रह्म यत्तत् पञ्चकोशविवेकतः ।
बोद्धुं शक्यं ततः पञ्चकोशकं प्रविविच्यते ॥

* * * *

इति श्रीपरम . . . पञ्चकोशविवेकव्याख्या समाप्ता ॥

नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ।
मयाद्वैतविवेकस्य क्रियते पदयोजना ॥

* * * *

मू ॥ ईश्वरेणापि जीवेन सृष्टं द्वैतं विविच्यते ॥

ईश्वरेण कारणोपाधिकेनान्तर्यामिणा जीवेनापि कार्योपाधिकेनाहं प्रत्यगिना सृष्टमुत्पादितं द्वैतं जगत् विविच्यते विभज्य प्रदर्शित इत्यर्थः ॥

*　　*　　*　　*

इति श्री . . . अद्वैतविवेकस्य पदयोजना समाप्ता ॥

*　　*　　*　　*

मू ॥ येनेक्षते शृणोतीदं जिघ्रति व्याकरोति च ।
स्वाद्वस्वादु विजानाति तत्प्रज्ञानमुदीरितम् ॥

चक्षुर्द्वारदशनिर्गतान्तःकरणवृत्त्युपहितेन येन चैतन्येन इदं दर्शनयोग्यं रूपादिकमीक्षते पश्यति पुरुषः ॥

*　　*　　*　　*

इति श्री . . . . महावाक्यविवेकव्याख्या समाप्ता ॥

*　　*　　*　　*

मू ॥ ब्रह्मानन्दं प्रवक्ष्यामि ज्ञाते तस्मिन्नशेषतः ।
ऐहिकामुष्मिकानर्थव्रातं हित्वा सुखायते ॥ इति
निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वरः ।
ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥ इति

*　　*　　*　　*

इति श्री . . ब्रह्मानन्दे योगानन्दो नाम प्रथमोऽध्यायः ॥

*　　*　　*　　*

धर्माधर्मवशादेष जायतां म्रियतामपि ।
पुनर्देहलक्षैः किन्नो दाक्षिण्यतो वदेदिति ॥

*　　*　　*　　*

इति . . ब्रह्मानन्दे आत्मानन्दो नाम द्वितीयोऽध्यायः ॥

*　　*　　*　　*

योगानन्दः पुरा प्रोक्तो यस्यात्मानन्द इष्यताम् । इति

* * * *

इति श्रीपरम . . ब्रह्मानन्दे अद्वैतानन्दो नाम तृतीयोऽध्यायः ॥

* * * *

योगेनात्मविवेकेन द्वैतमिथ्यात्वचिन्तया ।
ब्रह्मानन्दं पश्यतोऽथ विद्यानन्दो निरूप्यते ॥

* * * *

इति . . ब्रह्मानन्दे विद्यानन्दो नाम चतुर्थोऽध्यायः ॥

* * * *

एषोऽस्य परमानन्दो योऽखण्डैकरसात्मकः ।
अन्यानि भूतान्येतस्य मात्रामेवोपभुञ्जते ॥ इति

* * * *

ग्रन्थमुपसंहरति ॥

ब्रह्मानन्दाभिधे ग्रन्थे पञ्चमाध्याय ईरितः ।
विषयानन्द एतेन द्वारेणान्तः प्रविश्यताम् ॥
नत्वा श्रीभारतीतीर्थविद्यारण्यमुनीश्वरौ ।
क्रियते चित्रदीपस्य व्याख्या तात्पर्यबोधिनी ॥

* * * *

इति . . तात्पर्यबोधिनी नाम चित्रदीपव्याख्या समाप्ता ॥

वेदार्थस्य प्रकाशेन तमोहार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥
नत्वा श्रीभारतितिर्थविद्यरण्यमुनीश्वरौ ।
क्रियते तृप्तिदीपस्य व्याख्यानं गुर्वनुग्रहात् ॥

* * * *

मू ॥ अस्याः श्रुतेरभिप्रायस्सम्यगत्रविचार्यते ।
जीवन्मुक्तस्य या तृप्तिः सा तेन विशदायते ॥ इति

End:

श्रुत्यनुभूतिभ्यां निश्चित्य सर्वबन्धैः प्रमातृत्वकर्तृत्वादिभिः प्रमुच्यते प्रकर्षेण सर्वात्मना मुच्यते जाग्रदादिष्ववस्थासु एक एवात्मा मन्तव्यः एवं विवेकज्ञानेन स्थानत्रयव्यतीतस्य ॥

---

## 39. लौकिकन्यायरत्नाकरे पूर्वार्धम्.

Beginning:

यस्माज्जातं निखिलभुवनं जीव्यते येन जातं
यस्मिन्नन्ते व्रजति विलयं सच्चिदानन्दरूपे ।
यस्य श्वासा निगमनिचया यश्च तन्मात्रमेयः
तं प्रत्यञ्चं शिशुशशिशिखं साम्बमूर्तिं नतोऽस्मि ॥ 1 ॥

*  *  *  *

गुरून्नत्वा सुतत्त्वज्ञान् दयालून् रामवत्सदा ।
लौकिकन्यायरत्नानामाकरस्तन्यते मया ॥ 12 ॥
न्यायार्थं विषयश्चैवोदाहृतिश्च यथामति ।
वदिष्यामोऽत्र सङ्क्षेपाद्विस्तरादपि कुत्रचित् 13 ॥
प्रसङ्गादागतानान्तु न्यायानां तत्र विस्मृते ।
अर्थमात्रं वदिष्यामः क्वचिदन्यामुदाहृतिम् 14 ॥
प्रसङ्गादायाता अपि निगदविख्यातविषया
न ते व्याख्यास्यन्ते पुनरसकृदुक्ताश्च विरलाः ।
पुनर्व्याख्यास्यन्ते विषयकथनादि(?)प्रवितताः
पुरा प्रोक्तान् कांश्चित्पुनरपि वदिष्यामि विषये ॥ 15 ॥

अर्थादर्थो न शब्दार्थ इत्याद्या बुद्धसूक्तयः ।
पूर्वैन्यायितया प्रोक्ता वदिष्यामस्ततस्तथा ॥ 16 ॥

प्रसङ्गात्पठितेष्वत्र शास्त्रीयेष्वपि कस्य चित् ।
अक्षरार्थं वदिष्यामस्तात्पर्यं चैव कस्य चित् ॥ 17 ॥

सन्दर्भेन सुबोध्याः स्युः शिष्ठा न्यायाः सुबुद्धिभिः ।
लौकिकेषु यथाबुद्धि यथासम्भवमादरात् ॥ 18 ॥

उदाहृतिं वदिष्यामः प्रायो वेदान्तशास्त्रगाम् ।
मीमांसान्यायगां काश्चित् काश्चिच्चापरशास्त्रगाम् ॥ 19 ॥

आम्नायशिरसामस्या निबन्धत्वं न तावता ।
स्याद्वैशेष्यात्तु तद्वाद इति न्यायसमाश्रयात् ॥ 20 ॥

पञ्चीकृतस्य भूम्यादेः पृथिवीत्वादिकं यथा ।
आम्नायान्तनिबन्धत्वं तथास्य स्यादसंशयम् ॥ 21 ॥

*　　　*　　　*　　　*

श्रीमन्नानकसद्गुणागवनजे वंशे लसन्मौक्तिक-
श्रीमद्रामदयालुशिष्यरघुणा नाथात्तनाम्ना कृते ।
प्रीत्यै साम्बशिवस्य लोकविदितन्यायाख्यरत्नाकरे
पूर्णो मेयनिरूपणे समुदितः पूर्वार्धभागः शिवः ॥

Colophon:—इति श्रीमद्रामदयालुशिष्येण सोमवंशीविन्दराय-कुलोत्तंसगुलाबरायवर्मसूनुना उदासीनावस्थेन रघुनाथेन विरचिते लौकिकन्यायरत्नाकरे प्रमेयनिरूपणपरं पूर्वार्धं समाप्तम् ॥

---

## लौकिकन्यायरत्नाकरे उत्तरार्धम्.

अथ प्रमाणतत्त्वप्रतिपादनप्रचुरो भागः प्रारभ्यते । अत्रैव च प्रसङ्गेन पूर्वोक्तार्थोऽपि दृढीक्रियते यदाहि तरति शोकमात्मविदित्यादौ

प्राचीनवार्तिकमतमाश्रित्य सकलपदार्थस्मरणाद्युगपदेव विशेष्ये विशेषणं तत्र विशेषणान्तरमिति न्यायेन सर्वपदार्थानामन्योन्यं क्रियाकर्मभावेनान्वयरूपशाब्दबोधः स्वीक्रियते तदा खलेकपोतन्यायोऽवतरति ॥

यथाहुः ॥ वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत्पतन्ति ।
तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति ॥ इति ॥

अत्र वृद्ध इव शिशुभिः कपोतैः चिरतरचिरसन्निहितकालोक्तानां पदार्थानां साम्यं बोद्धव्यं न चोत्तरपदार्थस्मरणेन पूर्वपदार्थस्मरणनाशात् कथं युगपत्सर्वपदार्थस्मरणमिति शङ्क्यम् प्रत्येकपदार्थानुभवजन्यसंस्कारैरन्यस्य तावद्विषयकस्मरणस्योदयसम्भवात् ।

End:

क्वचिदन्यो लौकिकन्यायः संचार्यते यथा कल्यादौ हरिहरावन्योन्यं ध्यात्वान्योन्यरूपतां प्राप्तावित्युपपादनपरे पौराणिकाख्याने कीटभृङ्गन्यायः प्रवर्त्यते कीटो यथा भृङ्गे गृहीतस्तद्भयात्तमभिध्यायंस्तद्रूपतामेति तथा तौ प्रेम्णा अन्योन्याभिध्यानादन्योन्यात्मकतां प्राप्तावित्यर्थः । अत्र सर्वत्र न्यायोदाहरणयोर्युक्तिचित्साधर्म्येण चन्द्रमुखन्यायेन साम्यं बोद्धव्यं गोगवयन्यायः मार्जारव्याघ्रन्यायः श्वसिंहन्यायश्चेदृशः चन्द्रवन्मुखं गोसदृशो गवयो मार्जारसमो व्याघ्र इत्यादौ यथा किंचित्साधर्म्यमवलम्ब्य साम्यमभिधीयते तथा प्रकृतेऽपि बोद्धव्यं एवं सर्वे लौकिका दृष्टान्ता लौकिक्यो गाथाश्च सर्वा न्यायत्वेनोदाहर्तुं(?)शक्यन्त इत्यलमतिप्रपञ्चेन ।

व्याख्यातं न्यायवृन्दं निजमतिमनतिक्रम्य यावन्मयात्तं
पारं प्राप्तुं तु शक्तो न हि भवति गुरुः कः पुनर्मादृशोऽज्ञः ।
सर्वः सर्वं न वेत्ति प्रथितमिदमतो नास्ति मेऽत्रापराधः
शिष्टा ज्ञेयाः स्वयं वै सुविमलमतिभिः सम्यगाराधितार्यैः ॥ 1 ॥

अत्र प्रथमपादे यावत्तैलं तावद्व्याख्यातमिति न्यायप्रवृत्तिगोचरत्वं बोद्धव्यं भिक्षुः कौपीनलाभं बहुमन्यत इति न्यायः दरिद्रः कन्थालाभं वरं मन्यत इति न्यायः यावत्स्नाता तावत्पुण्यं इति न्यायश्चेह बोद्धव्यः . . . . . . तृतीये न हि सर्वः सर्वं जानातीति न्यायोऽर्थतः पठितः सर्वसाध्यान्निवृत्तिर्नापवादायेति न्यायतः न हि सर्वत्रानीशशक्तिरिति न्यायश्चेह सूचितः . . . . . . . .

वेदेन्द्वाम्नायसङ्ख्याकैर्लौकिकन्यायरत्नकैः ।
व्याप्तोऽब्धिः प्रीतयेऽयं स्यात्सोमसोमशिखामणेः ॥ 2 ॥ . . .

न्यायव्याख्याच्छलेनात्र सिद्धान्तश्शास्त्रपट्टगः ।
वादसिद्धान्तयोर्न्यस्तो विज्ञातोऽस्तु सतां मुदे ॥ 4 ॥ . . .

यो ब्रह्मा यश्च विष्णुर्वसुतनुरपि यो यश्च गौर्यादिमूर्ति-
र्यश्चात्मा सर्वजन्तोः श्रुतिशिखरगिरां यश्च तात्पर्यभूमिः ।
यस्याबोधात्समुत्थो व्रजति च विलयं यस्य बोधात्प्रपञ्च-
स्तं शुद्धं संप्रपद्ये शिवममरमजं शम्भुमीशानमीड्यम् ॥ 8 ॥

* * * *

Colophon:—इति श्रीसाधुबृन्दवन्दितपदारविन्दश्रीमद्रामदयालुशिष्येण सोमवंशीयविन्दरायकुलोत्तंसश्रीसेवीदेव्याश्रितपादारविन्दश्रीगुलावरायसूनुनोदासीनावस्थेन रघुनाथवर्मणा विरचितं लौकिकन्यायरत्नाकराख्यं प्रकरणं सम्पूर्णम् ॥

---

## 40. नरपतिजयचर्या (आन्ध्रटीकासहिता).

Beginning:

अव्यक्तमव्ययं शान्तं नितान्तं योगिनां प्रियम् ।
सदानन्दस्वरूपाय तं वन्दे ब्रह्म सर्वगम् ॥

विविधविबुधवन्द्यो भारतीवन्द्यमानः
प्रचुरचतुरभावं दातुकामो जनेभ्यः ।
नरपतिरिति लोके ख्यातिनाना (तनामा) भिधास्ये
नरपतिजयचर्य्यानामकं शास्त्रमेतत् ॥

कृते जयार्णवं नाम त्रेतायां ब्रह्मयामलम् ।
द्वापरे विजयाख्यातं कलौ चैव स्वरोदयः ॥

ब्रह्मयामलमादौ स्याद्द्वितीयं विष्णुयामले ।
रुद्रयामलमाख्यातं चतुर्थं त्वादियामले ॥

स्कन्दं दत्वा यामलाख्यं षष्ठं कूर्मस्य यामलम् ।
तत्परं यामले देव्या इति यामलसप्तकम् ॥

श्रुत्वादौ यामलास्सप्त तथा युद्धजयार्णवम् ।
कुमारिकौशलं चैव योगिनीजालशम्बरम् ॥

रसाद्यं च त्रिमुण्डं च स्वरसिंहः स्वरार्णवः ।
भूबलं गारुडं नाम पट्टं च स्वरभैरवम् ॥

तन्त्रं रणहिनाख्यं च सिद्धान्तं जयपद्धतिम् ।
पुस्तकेन्द्रं च कान्द्रं च दर्शनं ज्यौतिषं तथा ॥

मन्त्रयन्त्राण्यनेकानि कूटं यानि मयानि च ।
तन्त्रयुक्तं च विज्ञेयं विख्यातं बडवानलम् ॥

एषां सर्वशास्त्राणां दृष्ट्वा सारं महात्मनाम् ।
सारोद्धारं प्रवक्ष्यामि सर्वसत्त्वानुरूपयोः ॥

रथाश्वगजभूपालैः सम्पूर्णा यदि वाहिनी ।
तथा विभङ्गमायाति नृपे हीनस्वरोदये ॥

तावत्तरन्ति ते वीरा दोर्भ्यामाहवसागरम् ।
यावत्पतन्ति नो चक्रे स्वरास्तु बडवानले ॥

*  *  *  *

Colophon :—इति श्रीमहाराजाधिराजश्रीसूर्यवंशान्वयश्रीसरस्वतीवरप्रसादकुलपद्मादित्यदेवविरचिते नरपतिजयचर्यास्वरोदये भूबलतन्त्रमहार्णवसारे चतुरशीतिचक्र बलाध्यायो नाम चतुर्थः ॥

पञ्चबन्धानुरूपं स्वरबलविमलं देहकल्पप्रधानं
राश्यृक्षं इन्दुऋक्षं ग्रहवशफलदं स्थायियायिप्रधानम् ।
वर्गो याद्यरावर्णं बलविधिसहितं मातृकावेदरम्यं
भूपालानां जयार्थं नरपतिरुदितश्चक्रबन्धप्रबन्धम् ॥

इति श्री . . . . . . . चतुर्थः ॥

---

## 41. नारदीयसंहिता (असमग्रा).

Beginning :

अणोरणुतरस्साक्षादीश्वरो महतो महान् ।
आत्मा गुहायां निहितो जन्तोर्जयत्यतीन्द्रियः ॥
सिद्धान्तसंहिताहोरारूपस्कन्धत्रयात्मकम् ।
वेदस्य निर्मलं चक्षुर्ज्योतिश्शास्त्रमनुत्तमम् ॥
अस्य शास्त्रस्य संबन्धो वेदाङ्गमिति धातृतः ।
अभिधेयां च जगतः शुभाशुभनिरूपणम् ॥
यज्ञाध्ययनसङ्क्रान्तिग्रहाष्षोडशकर्मणाम् ।
प्रयोजनं च विज्ञेयं तत्कालं च विनिर्णयम् ॥
विनैतदखिलं श्रौतस्मार्तकर्म न सिध्यति ।
तस्माज्जगद्धितायेदं ब्रह्मणा रचितं पुरा ॥

तं विलोक्याथ तत्सूनुर्नारदो मुनिसत्तमः ।
उक्तं स्कन्धद्वयं पूर्वं संहितास्कन्धमुत्तमम् ॥
वक्ष्ये शुभाशुभफलज्ञप्तये देहधारिणाम् ।
होरास्कन्धेऽन्यशास्त्रस्य व्यवहारप्रसिद्धये ॥
संज्ञान्युक्तानि सर्वाणि सम्यक्तत्र पृथक् पृथक् ।
शास्त्रोपनयनाध्यायो ग्रहचारोऽब्दलक्षणम् ॥
तिथिवासरनक्षत्रवेदतिथ्यथ संज्ञिकाः ।
चन्द्रताराबलाध्यायः सर्वलग्नार्तवाह्वयः ॥
आधानपुंसिसीमन्तजातनामान्नभुक्तयः ।
चौलाङ्कुरार्पणं मौञ्जीक्षुरिकाबन्धनक्रमः ॥
समावर्तनवैवाहप्रतिष्ठासद्मलक्षणम् ।
यात्राप्रवेशनं सद्यो वृष्टिः कूर्मविलक्षणम् ॥
उत्पातलक्षणं शान्तिमिश्रिकाश्राद्धलक्षणम् ।
सप्तत्रिंशद्भिरध्यायैर्नारदीयाख्यसंहिताम् ॥
य इमां पठते भक्त्या स दैवज्ञो (भवेद्ध्रुवम्) हिवेधवत् ।
त्रिस्कन्धज्ञो दर्शनीयः श्रौतस्मार्तक्रियापरः ॥
निर्दाम्भिकः सत्यवादी दैवज्ञो दैवतस्थितः । * * *

Colophon:—इति नारदीयसंहितायां शास्त्रोपनयाध्यायः ॥

End :

अलसं सुखिनं स्थूलं पजितं मृष्टाशनं भृगोस्तनयः ।
शयनोपचारकुशलं द्वादशगः स्त्रीजितं कुरुते ॥

ग्रन्थान्तरे ॥ उचितव्ययकारित्वं रिक्थगे देवतागुरौ ।
बुधभार्गवयोश्चापि गुरुवद्धि सुखं फलम् ॥

शनिः ॥ विकलः पतितो विसुखो विषमाक्षो निर्घृणो विगतलज्जः ।
व्ययभवनगते सौरे वृद्धव्ययः स्यात्सुपरिभूतः ॥

---

42. वास्तुप्रकरणम् (ज्योतिषदर्पणम्).

Beginning :

अथ वास्तुप्रकरणम् ॥

सौम्ये फाल्गुनवैशाखमाघश्रावणकार्तिके ।
मासाः स्युर्गृहनिर्माणे पुत्रपौत्रधनप्रदाः ॥

व्याधिश्चैत्रेऽथ वैशाखे ज्येष्ठे मृत्युर्भवेत्सदा ।
आषाढे मृत्युरत्नादिपशुनाशमवाप्नुयात् ॥

श्रावणे मित्रलाभः स्या (द्धनी) धनि भाद्रपदे तथा ।
पत्नीनाशश्चाश्वयुजे कार्तिके धनधान्यकम् ॥

मार्गशीर्षे तथा भक्तं पुष्ये तस्करतो भयम् ।
माघे लाभस्तु बहुलः फाल्गुने काञ्चनीसुता ॥

वासुदेवे प्रसुप्तेऽपि सूर्ये मूलत्रिकोणगे ।
गृहारम्भप्रवेशं च कुर्याच्छ्रावणमासिके ॥

स्थिरराशिगते सूर्ये शोभनं गृहकर्मणि ।
चरस्थे मध्यमं विद्याद्द्विस्वभावेऽतिनिन्दितम् ॥

जलाग्निवातोपहते विदेशे यज्ञकर्मणि ।
न मासर्तुदिनर्क्षादिलग्नमूढादिचिन्तनम् ॥

काश्यपः ॥ क्षेत्रस्वीकरणं पूर्वं गन्धवर्णरसप्लवैः ।
मधुपुष्पसुरामांसगन्धविप्रानुपूर्वकम् ॥

सितमीपद्रक्तहरितकृष्णवर्णं यथाक्रमम् ।
मधुरं कटुकं तिक्तं कषायं रससंज्ञितम् ॥
सर्वसंपत्प्रदं नृणामीशानप्रागुदङ्भवम् ।

*  *  *  *

End :

वास्तुपुरुषं पूजयेत् तत्र मन्त्रः ॥

वास्तुपुरुष नमस्तेऽस्तु भूशय्याभिरत प्रभो ।
मद्गृहे धनधान्यादिसौभाग्यं कुरु मे सदा ॥

एवं संप्रार्थ्य कुण्डे स्वगृह्योक्तप्रकारेणाग्निं प्रतिष्ठाप्य एभिरेव मन्त्रैः प्रतिदैवतं समिदाज्यचरुभिरष्टाविंशतिवारं प्रत्येकं हुत्वा वास्तुमन्त्रेण वास्तुहोमं कुर्यात् होमशेषं समाप्य वादित्रादिसहितः क्षेत्राद्बहिस्त्वीशान्यदिशे नागमातृभ्यः आग्नेये कोणे विदार्यै नैरृतिकोणे पूतनायै वायव्यकोणे वावरक्षस्यै नम इति मन्त्रैरेतैः ताभ्यश्च चरुणा बलिं दद्यात् ॥ ब्राह्मणेभ्यो यथाशक्ति काञ्चनं दत्वा ब्राह्मणान्भोजयेत् ॥

वास्तुहोमं विना यत्र कृतं वस्तु विनश्यति ।
तस्माद्वास्त्वर्चनं होमं कृत्वाथ प्रविशेद्बुधः ॥

इति न्यायाद्वास्त्वर्चनं कृत्वा गृहं प्रविशेत् ॥

Colophon :—इति काञ्चनयज्ञार्यवर्येण विरचिते ज्यौतिषदर्पणे प्रवेशाध्यायः ॥

इति वास्तुप्रकरणं समाप्तम् ॥

---

## 43. कामकलासूत्रम्.

Beginning :

सकलभुवनोदयस्थितिलयमयलीलाविनोदनोद्युक्तः ।
अन्तर्लीनविमर्शः पातु महेशः प्रकाशमात्रतनुः ॥

सा जयति शक्तिराद्या निजसुखमयनित्यनिरुपमाकारा ।
भाविचराचरबीजा शिवरूपविमर्शनिर्मलादर्शा ॥

*　　　*　　　*　　　*

एतैरोघत्रितयमनुगृहीतं गुरुक्रमो विदितः ।

*　　　*　　　*　　　*

उदितः पुण्यानन्दादिति कामकलाङ्गनाविलासोऽयम् ।
परशिवभुजङ्गभावाकर्षितहर्षाय कल्पते नित्यम् ॥

End :

चिन्तातरङ्गतरलस्तृष्णासलिलप्रपञ्चवाराशिः ।
यदनुग्रहेण तीर्णस्तस्मै श्रीनाथनाविकाय नमः ॥

Colophon :—इति कामकलासूत्रं संपूर्णम् ॥

---

## 44. गीतासारः.

Beginning :

अस्य श्रीगीतासारस्तोत्रमहामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः। गायत्रीत्रिष्टुब्जगत्यश्छन्दांसि। अग्निवायुसूर्या देवता। आहवनीयगार्हपत्यदक्षिणाग्नयः स्थानानि । ऋग्यजुस्सामवेदनीलपीतश्वेतवर्णा अकारो बीजं उकारः शक्तिः मकार इति कीलकम् श्रीसाम्बमूर्तिप्रेरणया श्रीसाम्बमूर्तिप्रीत्यर्थे जपे विनियोगः।अं अङ्गुष्ठाभ्यां नमः।उं तर्जनीभ्यां नमः। मं मध्यमाभ्यां नमः। अं अनामिकाभ्यां नमः। उं कनिष्ठिकाभ्यां नमः। मं करतलकरपृष्ठाभ्यां नमः । अं हृदयाय नमः । उं शिरसे स्वाहा मं शिखायै वौषट् अं कवचाय हुं उं नेत्राभ्यां वौषट् मं अस्त्राय फट् भूर्भुवस्सुवरोमिति दिग्बन्धः ॥

ध्यानम् ॥ वेदादिमूलं सकलस्वराणां त्रयोदशस्थं शशिबिन्दुरूपम् ।
नादान्वितं सप्तभुजङ्गरूपं त्रिवेदमूलं प्रणवं नमामि ॥

अर्जुन उवाच ॥

ओङ्कारस्य च माहात्म्यं रूपस्थानं परंतप ।
तत्सर्वं श्रोतुमिच्छामि ब्रूहि मे पुरुषोत्तम ॥

श्रीभगवानुवाच ॥

साधु पार्थ महाबाहो यन्मां त्वं परिपृच्छसि ।
विस्तरेण प्रवक्ष्यामि तन्मे निगदतः शृणु ॥

पृथिव्यग्निश्च ऋग्वेदो भूरित्येव पितामहः ।
अकारे तु लयं प्राप्तः प्रथमे प्रणवात्मके ॥

अन्तरिक्षं यजुर्वायुः भुवो विष्णुः सनातनः ।
उकारे तु लयं प्राप्तो द्वितीये प्रणवात्मके ॥

दिवः सूर्यः सामवेदः स्वरित्येव महेश्वरः ।
मकारे तु लयं प्राप्तः तृतीये प्रणवात्मके ॥

End :

सारमुद्धृत्य कृष्णेन अर्जुनस्य मुखे हुतम् ।

* * * *

सर्ववेदमयी गीता सर्वशास्त्रमयो मनुः ।
सर्वतीर्थमयी गङ्गा सर्ववेदमयो हरिः ॥

पादं वाप्यर्धपादं वा श्लोकं श्लोकार्धमेव वा ।
नित्यं पठंति यो विप्रः स वै मोक्षमवाप्नुयात् ॥

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥

Colophon :—इति श्रीमन्महाभारते शतसहस्रिकायां परमहंसस्य भीष्मपर्वणि गीतासारे ओङ्कारयोगो नाम परमरहस्याध्यायः ॥

## 45. प्रपञ्चसारसङ्ग्रहः (असमग्रः).

Beginning:

नत्वा श्रीशङ्कराचार्यममरेन्द्रयतीश्वरम् ।
कुर्वे प्रपञ्चसारस्य सारसङ्ग्रहमुत्तमम् ॥

तत्र प्रपञ्चसारे यच्छङ्कराचार्यैरुक्तं मन्त्रयन्त्रप्रयोगादितत्सर्वमपि सारभूतमेव तथापीदानीं मन्दप्रज्ञानां विस्तरशो ज्ञातुमनुष्ठातुं चाशक्यत्वादत्यन्तोपकारभूतत्वेन यत्सारतरं तदल्पग्रन्थेनैव यथा सर्वमन्त्रयन्त्रतन्त्रसारग्रहणं स्यात् तथा सर्वतः सारं गृहीत्वा मया सत्सम्प्रदायसर्वस्वाभिव्याख्यानोक्तमार्गेण वक्ष्यते तत्र पुनः प्रसङ्गात् तत्र मन्त्रकल्पान्तरे मन्त्रसारक्रमदीपिकासनत्कुमारीयशारदातिलकमन्त्रदेवनाप्रकाशिकादौ यद्यन्मन्त्रयन्त्रतन्त्राद्युक्तं तदपि किञ्चित्किञ्चिद्वक्ष्यते तत्र प्रपञ्चसारे प्रथमं तावत् क्षीराब्धौ शेषपर्यङ्कशायिनं महाविष्णुं प्रति ब्रह्मादिभिस्त्रिभिर्मूर्तिभिस्तेषामुत्पत्त्यादिविषयः प्रश्नप्रकारः प्रथमे पटले निरूपितः । पुनर्विष्णुना तदुत्तररूपेण त्रिगुणात्मिकाया भुवनेश्वर्याःस्वशक्त्याः सकाशात् त्रयाणां ब्रह्मादीनामितरेषां देवादीनां च सर्ववैदिकतान्त्रिकमन्त्रयन्त्रतन्त्राणां चोत्पत्तयो निरूपिताः । प्रथमपटलावशिष्टग्रन्थैस्सह द्वितीयादिभिस्त्रिभिः पटलैस्तदुपरि पञ्चमषष्ठयोः पटलयोस्तु सर्वमन्त्रसाधारणदीक्षार्थं मण्डलं मण्डपनिर्माणवास्तुबलिकलशपूजाहोमकलशाभिषेकगुरूपसर्पणमन्त्रोपदेशगुरुदक्षिणाक्लृप्त्यादिप्रकार उक्तः ॥ तत्सर्वमिदानीन्तनैरतिप्रयाससाध्यत्वादननुष्ठीयमानत्वाद्ग्रन्थविस्तरभयाच्चात्र न लिख्यते तस्मात्तत्सर्वं मूलग्रन्थ एवावलोकनीयं तदनुष्ठानेच्छुभिः ॥ दीक्षाशब्दार्थस्तु अत्रैवोक्तः ॥

दद्याच्च दिव्यभावं क्षिणुयाद्दुरितान्यतो भवेद्दीक्षा ।
मननात्तत्त्वपदस्य त्रायत इति मन्त्र उच्यते भवतः ॥

इति दीक्षामहिमा मन्त्रमहिमा चोक्तः ॥ तत्रो भयत इति भेदवासनाग्रन्थिरूपत इति पुनरपि दीक्षाया अवश्यकर्तव्यतात्रैवोक्ता ॥

दैवादिकस्याप्यथ मानुपादेः पैत्रादिकस्याप्यथ वत्सरस्य ।
आदिं समारभ्य समग्रसम्पद्यत्नेन दीक्षाविधिमारभेत ॥ इति

एवं सम्भाव्य भोजने कृते फलमाह ।

End :

* * * *

सायं प्रातरनेन होमविधिना भोज्यानि नित्यं भजन् ।
प्राणीनप्रमदोदरं प्रविशति प्राणाग्निहोत्री पुनः ।

Colophon :—इति प्रपञ्चसारसङ्ग्रहे गीर्वाणेन्द्रविरचिते सप्तमः पटलः ॥

अथ त्रिपुराविधिः आराधऋषिः देवीगायत्रीछन्दः त्रिपुराभैरवीदेवता . . . . . . . . . . मूलमन्त्रमुच्चार्य निर्वाणरूपे परे संविन्मये श्रीमहात्रिपुरसुन्दरी . . . . ॥

---

## 46. शिवभुजङ्गः ॥

Beginning :—

कदा वा विरक्तः कदा वा सुभक्तः कदा वा महायोगिसंसेव्यमुक्तिः ।
हृदाकाशमध्ये सदा संवसन्तं चिदानन्दरूपं शिवं साम्बमीले ॥
सुधीराजहंसैः स्सुपुण्यावतंसैश्चिरश्रीसमेतैस्सदाचारपूतैः ।
उदारैर्गतासूयसंसक्तभावैरधिर्निर्गतक्रोधलोभप्रचारैः ॥

End :

अकण्ठेकलङ्कादनङ्गेभुजङ्गा-
दपाणौकपालादफालेऽनलाक्षात् ।
अमौलौशशाङ्कादवामेकलत्रा-
दहं दैवमन्यन्न मन्ये न मन्ये ॥ 23 ॥

किरीटे निशीशो ललाटे हुताशो
भुजे भोगिराजो गले कालिमा च ।
तनौ कामिनी यस्य तत्तुल्यदैवं
न मन्ये न मन्ये न मन्ये न मन्ये ॥ 24 ॥

शिवादन्यथा दैवतं नाभिजाने
महादेव शम्भो गिरीश त्रिशूलिन् ।
त्वयीदं समस्तं विभातीति यस्मा
च्छिवोऽहं शिवोऽहं शिवोऽहम् शिवोऽहम् ॥ 25 ॥

भुजङ्गप्रियाकल्प शम्भो मयेदं
भुजङ्गप्रयातेन वृत्तेन क्लृप्तम् ।
तव स्तोत्रमेतत्पठेद्यस्तु भक्त्या
स पुत्रायुरारोग्यमैश्वर्यमेति ॥

---

## 47. शिवानन्दलहरी (असमग्रा).

Beginning:

कलाभ्यां चूडालङ्कृतशशिकलाभ्यां निजतपः
फलाभ्यां भक्तेषु प्रकटितफलाभ्यां भवतु मे ।
शिवाभ्यामस्तोकत्रिभुवनशिवाभ्यां हृदि पुन-
र्भवाभ्यामानन्दस्फुरदनुभवाभ्यां नतिरियम् ॥ 1 ॥

गलन्ती शम्भो त्वच्चरितसरितः किल्बिषरजो
दलन्ती धीकुल्यासरणिषु पतन्ती विजयताम् ।
दिशन्ती संसारभ्रमणपरितापोपशमनं
वसन्ती मच्चेतोहृदभुवि शिवानन्दलहरी ॥ 2 ॥

End:

सारुप्यं तव पूजने शिव महादेवेति संकीर्तने
सामीप्यं शिवभक्तिधुर्यजनतासांगत्यसम्भाषणे ।
सालोक्यं च चराचरात्मकतनुध्याने भवानीपते :
सायुज्यं मम सिद्धमत्र भवति स्वामिन् कृतार्थोऽस्म्यहम् ॥ 29 ॥

त्वत्पादाम्बुजमर्चयामि परमं त्वां चिन्तयाम्यन्वहं
त्वामीशं शरणं व्रजामि वचसा त्वामेव याचे विभो ।
वीक्षां मे दिश चाक्षुषीं सकरुणां दिव्यैश्चिरं प्रार्थितां
शम्भो लोकगुरो मदीयमनसः सौख्योपदेशं कुरु ॥ 30 ॥

---

## 48. सौन्दर्यलहरी (असमग्रा).

Beginning:—

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं
न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि ।
अतस्त्वामाराध्यां हरिहरविरिञ्चादिभिरपि
प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति ॥ 1 ॥

तनीयांसं पांसुं तव चरणपङ्केरुहभवं
विरिञ्चस्सञ्चिन्वन्विरचयति लोकानविकलम् ।
वहत्येनं शौरिः कथमपि सहस्रेण शिरसां
हरः संक्षुद्यैनं भजति भसितोद्धूलनविधिम् ॥ 2 ॥

End:

शरज्ज्योत्स्नाशुभ्रां शशियुतजटाजूटमकुटां
वरत्रासत्राणस्फटिकघुटिकापुस्तककराम् ।
सकृन्नत्वा नत्वा कथमिव सतां सन्निदधते
मधुक्षीरद्राक्षामधुरिमधुरीणा भणितयः ॥ 15 ॥

कवीन्द्राणां चेतःकमलवनबालातपरुचिं
भजन्ते ये सन्तः कतिचिदरुणामेव भवतीम् ।
विरिञ्चिप्रेयस्यास्तरलतरशृङ्गारलहरी
गभीराभिर्वाग्भिर्विदधति सतां रञ्जनममी ॥ 15 ॥

---

## 49. (श्रीशृङ्गगिरि) गुरुपरम्परा ॥

Beginning :—

महादेवो महाविष्णुस्तृतीयश्चतुराननः ।
वसिष्ठः शक्तियोगीन्द्रः पराशरमुनीश्वरः ॥ 1 ॥
व्यासः शुको गौडपादो गोविन्दभगवान्मुनिः ।
गुरुः श्रीशङ्कराचार्यः षण्मतस्थापनः प्रभुः ॥ 2 ॥
विश्वरूपाचार्ययोगी नित्यबोधघनाभिधः ।
ततोज्ञानघनाचार्यो ज्ञानोत्तममहामुनिः ॥ 3 ॥
ज्ञानगिर्याचार्यवर्यस्तथा सिंहगिरीश्वरः ।
ततश्चेश्वरतीर्थाख्यो नृसिंहाभिधतीर्थकः ॥ 4 ॥
विद्याशङ्करतीर्थाख्यो लम्बिकायोगतत्परः ।
भारती कृष्णतीर्थाख्यो विद्यारण्यमहामुनिः ॥ 5 ॥
विद्यानगरनिर्माता वेदभाष्यादिकृद्गुरुः ।
श्रीचन्द्रशेखराभिख्यभारती तदनन्तरम् ॥ 6 ॥
नृसिंहभारती भूयो नृसिंहोपासकस्सदा ।
भक्तशङ्करनामाढ्यः पुरुषोत्तमभारती ॥ 7 ॥
श्रीचन्द्रशेखराभिख्यभारती तदनन्तरम् ।
नृसिंहभारती चैव पुरुषोत्तमभारती ॥ 8 ॥

भारती रामचन्द्राख्यो नरसिंहाख्यभारती ।
नृसिंहभारती ज्ञेयो नृसिंहोऽभिनवस्तथा ॥ 9 ॥
सच्चिदानन्दयोगीन्द्रः स्तंभे हेरम्बदर्शकः ।
श्रीनृसिंहाख्ययोगीन्द्रः सच्चिदानन्दभारती ॥ 10 ॥
ततश्चाभिनवाभिख्यः सच्चिदानन्दभारती ।
ततोऽभिनवपूर्वश्रीनृसिंहाभिधभारती ॥ 11 ॥
श्रीसच्चिदानन्दयोगीन्द्रतपश्चर्यापरायणः ।
पुनश्चाभिनवाभिख्यः सच्चिदानन्दभारती ॥ 12 ॥
श्रीशृङ्गेरीपुराधीशः श्रीविद्यामन्त्रबोधकः ।
श्रीमदाचार्यसदृशश्रीनृसिंहयतीश्वरः ॥ 13 ॥
भारतीनामविख्यातःतपःशीलो जगद्गुरुः ।
राजाधिराजसंपूज्यो जगत्ख्यातो विराजते ॥ 14 ॥

---

## 50. शङ्कराचार्यचरितम्.

Beginning :

गणेशाय नमस्तस्मै यत्प्रसादाद्विवस्वतः
प्रत्यूहध्वान्तविध्वंसः क्रियते सर्वकर्मणाम् ।

* * * *

एषा सरस्वती भूयात्सतामानंन्ददायिनी ।
समाश्रितपदाम्भोजजनतासुरपादपः ।
सर्वदा मे शुभा . . . . ॥
आपन्नाज्ञतमोराशिं पदार्थानतिदर्शयन् ।
गुरुरत्नप्रदीपो मे मनोधामनि भासताम् ॥
विष्णुलीलाव्रतानां ते कर्तारः कविपुङ्गवाः ।

जयन्ति सुतरां लोके वाल्मीकिव्यासशङ्कराः ।
सर्वागमावृतं वन्दे व्यासाचलमिमं कविम् ॥

बभूव शङ्कराचार्यः कीर्तिकल्लोलिनी यतः ।
अत्युन्नतस्य काव्याद्रेस्तलं व्याप्य भुवोऽखिलम् ॥

अर्थप्रसूनमादातुमसमर्थोऽहमद्भुतम् ।
ह्रस्वमत्यङ्कुशाग्राह्यं गृहीत्वा कल्पयामि तत् ॥

सपद्येन सृजेक . . . . . . . नामुदे ।
निबन्धनमिदं पुण्यमध्यायनवकान्वितम् ॥

करोमि यतिवर्यस्य निर्देशं समुपाश्रितः ।
कथासङ्क्षेप एवाद्यो द्वितीयो जनने भवेत् ॥

तृतीयो व्याससल्लापे तुरीयः शिष्यसंभवे ।
सुरेश्वरस्य शिष्यस्य सन्यासे पञ्चमस्ततः ॥

षष्ठस्तु हस्तामलकतोटकाख्यद्विजेन्द्रयोः ।
सप्तमे मुक्तिदायिन्याः काञ्च्या माहात्म्यकीर्तने ॥

रामेश्वरकथाख्याने . . . पहरेष्टमः ।
सर्वज्ञाननिधेस्तस्य शङ्कराचार्ययोगिनः ॥

नवमः परमानन्दसायुज्ये विहितावधिः ॥

शब्दे चार्थे कथायां च मौढ्य . . जामयान्यथा ।
यत्प्रोक्तमिह तत्त्वज्ञः क्षन्तुमर्हति शङ्करः ॥

यतीन्द्रं निर्मलात्मानं नानाविधकथाविदम् ।
शिष्यभूतो यतिः कश्चित्पप्रच्छ जनितादरम् ॥

स उवाच ॥ सर्वेषां गुरुरस्माकं सर्वज्ञो यतिपुङ्गवः ।
जातः श्रीशङ्कराचार्यः कस्मिन्देशे सुपावने ॥

आरभ्य जन्मतः कस्मिन् वत्सरे भिक्षुतामगात् ।
केषां निबन्धनानां च कर्ताभूत्स यतीश्वरः ॥

कति शिष्या महात्मानस्तस्याभूवन्महामतेः ।
सशिष्यः सञ्चरन्भूमौ कानि चक्रेऽद्भुतानि च ॥

सायुज्यं कुत्र देवेन प्राप्तवानपि तत्त्ववित् ।
एतत्सर्वमपि श्रोतुं गुरो कौतूह (तुक) वानहन् ॥

गुरुः ॥ हन्त ते कथयिष्यामि पापहं च महाद्भुतम् ।
अस्मद्देशिकवृत्तान्तं शिष्य तं शृणु सादरन् ॥

पुरा केरलमेदिन्यां कालडिक्षेत्रवासिनः ।
समीपे पद्मनाभस्य महानासीद्द्विजोत्तमः ॥

तस्य पुत्रो महान् जज्ञे वृषाचलनिवासिनः ।
सर्वज्ञस्य प्रसादेन सर्वज्ञः शङ्कराह्वयः ॥ . . .

* * * *

End :

देशिकेन्द्रो महायोगी स्तोत्रं कुर्वन् स वैष्णवम् ।
विवेश परमानन्दं भानुबिम्बान्तरस्थितम् ॥

इति श्रीशङ्कराचार्यचरितं लोकपावनम् ।
कृतं गोविन्दनाथेन यतिभक्तिसहायतः ॥

ज्ञानप्रदं नरैः सर्वै . . . शेषतः ।
पठितव्यं कीर्तितव्यं श्रोतव्यं चानुवासरम् ॥

ये पठन्ति नरा वृत्तं शङ्कराचार्ययोगिनः ।
ज्ञानं विद्यां च मोक्षं च प्राप्नुयुस्ते न संशयः ॥

* * * *

इति श्रीशङ्कराचार्यचरिते नवमोऽध्यायः ॥

## 51. चारुचर्या.

Beginning:

सुनीतिशास्त्रसद्वैद्यधर्मशास्त्रानुसारतः ।
विरच्यते चारुचर्या भोजराजेन धीमता ॥

ब्राह्मे मुहूर्त उत्तिष्ठेत् स्वस्थो रक्षार्थमायुषः ।
शरीरचिन्तां निर्वर्त्य कृतशौचविधिस्ततः ॥

अथ दन्तधावनविधिः.

प्रातरुत्थाय विधिना कुर्याद्वा दन्तधावनम् ।
वाग्यतः पुण्यकाष्ठेन त्वध ऊर्ध्वक्रमेणच ॥

पैत्यश्लेष्महरं नित्यं नैर्मल्यं चक्षुषोर्हितम् ।
श्रोत्रनासाविशुद्ध्यै च नराणां दन्तधावनम् ॥

निर्गुण्डीचूतबिल्वं च बीजपूरं हरिप्रिया ।
शुकेष्टः सुमनःश्लक्ष्मपामार्गैः शिरीषकैः ॥

क्षीरकण्टकवृक्षोत्थैर्बहुत्वगृजुकाष्ठकैः
अर्कन्यग्रोधखदिरकरञ्जककुभादिकम् ॥

प्रातर्भुक्त्वा च मृद्वग्रं कषायं कटुतिक्तकम् ।
भक्षयेद्दन्तपवनन्दन्तमांसान्यबाधयन् ॥

नाद्यादजीर्णवमथुश्वासकासज्वरादिषु ।
तृष्णास्यपाकहृन्मित्रं शिरः कर्णमयी च तत् ॥

विज्ञातवृक्षं क्षुण्णाग्रं मृद्वग्रं रसभूमिजं ।
कनिष्ठार्धसमस्थौल्यं प्रमाणं द्वादशाङ्गुलम् ॥

द्वादशाङ्गुलकं विप्रे काष्ठमाहुर्मनीषिणः ।
क्षत्रविट्शूद्रनीचानां नवषट्चतुरङ्गुलम् ॥

* * * * *

End:

अथान्यत् ॥

गोमूत्रं कटुतिक्तोष्णं पित्तलं कफवातनुत् ।
अष्टला . . . . नोदरेषु देयन्नित्यं चतुष्कलम् ॥

धारोष्णममृतं गव्यं धाराशीतं त्रिदोषहम् ।
पाणिशर्करया युक्तं पेयं तत् प्रस्थमात्रकम् ॥

निरुक्तवल्कं फलनारिकेलं
जले विनिक्षिप्य मुहूर्तमात्रम् ।
पचेद्गृहीत्वा हिमवालुकेन
निक्षिप्य यामद्वयमात्रमेव ॥

---

# EXTRACTS

FROM

# TAMIL MANUSCRIPTS.

## 1. தொல்காப்பியம்—(நச்சினர்க்கினியருரை.)

## சொல்லதிகாரம்.

### 1,—கிளவியாக்கம்.

**Beginning :**

உயர்திணையென்மனர் மக்கட்சுட்டே
யஃறிணையென்மனு ரவரலபிறவே
யாயிருதிணையி னிசைக்குமனசொல்லே.

என்பது சூத்திரம்.

இவ்வதிகாரம் மேற்பாயிரத்துள் " எழுத்துஞ் சொல்லும்பொருளு நாடி" என நிறுத்தமுறையானே எழுத்துணர்த்திச் சொல்லுணர்த்து கின்றுராதலின் சொல்லதிகாரமென்னும் பெயர்த்தாயிற்று; அது 'சொல்லையுணர்த்திய முறைமை' எனவிரியும்

**சொல்** என்றது எழுத்தினு ணக்கப்பட்டு இருதிணைப் பொருட்டன் மையும் ஒருவனுணர்தற்குக் கருவியாமோசையை. ஈண்டு ஆக்கப்படுதலென்றது - ஒருசொற்கூறுமிடத்து ஓரெழுத்துப் போக ஓரெழுத்துக் கூறுவதல்லது ஒருசொல்லாகமுடியும் எழுத்தெல்லாம் சேரக்கூறலாகாமையின் அவ்வெழுத்துகள் கூறிய அடைவேபோயிற்றேனுங் கேட்டார்கருத்தின்கண் ஒருதொடராய் நிலைபெற்றுநின்று பொருளை அறிவுறுத்தலை ; ஆயின் ஓரெழுத்தொருமொழிக்கு ஆக்குதலின்ருலெனின், ஓரெழுத்தொருமொழியைக் கூறியக்கால் அதுவுஞ்செவிப்புலனுய்க் கருத்தின்கண் நிகழ்ந்து பின்னர்பொருளையாக்குதலின் அதுவும் ஆக்குந்தன்மையுடைத்தாயிற்று.

**இருதிணைப்பொருளுமாவன** :ஐம்பாற் பொருளின் பகுதியாகிய காட்சிப்பொருளும் கருத்துப்பொருளும் அவற்றின் பகுதியாகிய ஐம்பெரும் பூதங்களும் அவற்றின்பகுதியாகிய இயங்குதிணையும் நிலைத்திணையுமாம். இவையெல்லாம் ஐம்பாலாயடங்கின.

இனிப் **பொருட்டன்மையாவது**—மக்கட்டன்மையும் இயங்குதிணைத் தன்மையும் நிலைத்திணைத்தன்மையுமாம். இத்தன்மை ஒருபொருட்குக் கேடுபிறந்தாலுந் தனக்குக்கேடின்றித் தானென்றேயாய்ப் பலவகைப்பட்டபொருடோறு நிற்குமென்றுணர்க.

**கருவியாவது**—அப்பொருட்டன்மையை ஒருவனுணர்தற்கு அவ்வோசைகருவியாய் நிற்றல். இதனை ஐம்பொறிகள் ஒருவன் பொருள்களை உணர்தற்குக் கருவியாய் நின்றாற்போலக் கருவியாய் நிற்குமென்றுணர்க.

இனி, ஓசையைச் சொல்லென்றிரேல் கடலொலி சங்கொலி விண்ணொலி முதலியனவுஞ் சொல்லாகாவோவெனின், சொல் இது முன்புயானுணர்ந்த எழுத்தென்றே பின்பு கூறியக்காலும் உணர நிற்றலின் கேடின்றி நிலைபேறுடையதாயிற்று. இவை அங்ஙனம் உணர்தலாற்றாமையானும் எழுத்தினானாக்கப்படாமையானும் நிலைபேறிலவாயின; ஆதலின் சொல்லெனப்படா; அன்றியும், ஓசை அரவம் இசை என்பனபோலன்றிக் கிளவி சொல் மொழி என்பன எழுத்தினானாகிய வோசையை உணர்த்தும். முற்கு வீளை முதலியன எழுத்தினானாக்கப்படாமையின் சொல்லாகா.

இனி, ஒருசாரார் எழுத்தினானாகிய வோசையுங் கெடுமென்பர். உரையாசிரியரும், '**சொல்லென்பது எழுத்தினானாக்கப்பட்டுத்திணையறிவுறுக்குமோசை**' என்றும், 'தன்னையுணர நின்றவழி எழுத்தெனப்படும், தான் இடைநின்று பொருளுணர்த்தியவழிச் சொல்லெனப்படும்' என்றுங்கூறினார் அக்கருத்தேபற்றி. இனி, **சேனாவரையர்** '**சொல் பொருள்குறித்துவரும்**' என்றாராலெனின், ஒருவன் பொருட்டன்மையை யுணர்தற்குச் சொல் கருவியாய் நிற்றலன்றித் தனக்கோருணர்வின்மையின் தான் ஒருபொருளைக்கருதி நிற்றலின்றெனமறுக்க.

அச்சொல்லை எட்டுவகையானும் எட்டிறந்த பல்வகையானுமுணர்த்துப.

(1) இரண்டுதிணையும், (2) ஐந்துபாலும், (3) எழுவகைவழுவும், (4) எட்டுவேற்றுமையும், (5) ஆறெட்டும், (6) மூன்றிடமும், (7) மூன்றுகாலமும், (8) வழக்குஞ்செய்யுளுமாகிய விரண்டிடமும், என எட்டுவகையானுணர்த்துப.

இனி, எட்டிறந்த பல்வகையாவன: சொல் நான்குவகையவென்றலும், அவற்றையே பலவாகப்பகுத்தலும், விகாரவகையும், பொருள்கோள்வகையும், செய்யுட்குரிய சொல் நான்கென்றலும் பிறவுமாம்.

அச்சொற்றான் தனிமொழியும் தொடர்மொழியுமென இருவகைப்படும். **தனிமொழி**பொருள்விளக்குமாறு "நிலந்தீ நீர்வளி விசும்போடைந்துங், கலந்த மயக்கமுலகமாகலி, னிருதிணை யைம்பாலியனெறி வழாமைத், திரிவில் சொல்லொடு தழாஅல்வேண்டும்" என்னும் மரபியற் சூத்திரத்தானுணர்க. **தொடர்மொழி** இருமொழித்தொடரும் பன்மொழித்தொடருமென இருவகைப்படும். அவை தொடருங்காற் பயனிலைவகையானும் தொகைநிலைவகையானும் எண்ணுநிலைவகையானும் தொடரும்.

இனி, வடனூலோர் கூறியவாறே அவாய்நிலையானும் அண்மைநிலையானும் தகுதியானுந் தொடருமென்றுமாம்.

. சாத்தன், உண்டான், மன், நனி என்பன தனிமொழி. சாத்தன் வந்தான், இது பயனிலைத்தொடர். யானைக்கோடு, இது தொகைநிலைத் தொடர். நிலநீர், இது எண்ணுநிலைத்தொடர். இவை இருமொழித்தொடர். அறம்வேண்டியரச னுலகம்புரந்தான் என்பது பன்மொழித்தொடர்.

வழுக்களைந்து சொற்களை அமைத்துக்கோடலின் இவ்வோத்துக் கிளவியாக்கமென்னும் பெயர்பெற்றது. இனிச், சொற்கள்பொருள்கண்மேலாமாறுணர்த்தினமையிற் கிளவியாக்கமென்னும்பெயர் பெற்றதென்றுமாம்; ஒருவன்மேலாமாறிது, ஒருத்திமேலாமாறிது, பலர்மேலாமாறிது, ஒன்றன்மேலாமாறிது, பலவற்றின்மேலாமாறிது, வழுவாமாறிது, வழுவமையுமாறிது எனப்பொருள்கண்மேலாமாறுணர்த்தினமையின்.

இனி, இத்தலைச்சூத்திரம் சொல்லும்பொருளும்வரையறுத்துணர்த்துகின்றது.

(இச்சூத்திரத்தின்பொருள்) மக்கட்சுட்டே எ-து மக்களாகிய நன்குமதிக்கப்படும்பொருளை, உயர்திணை என்மனார் எ-து உயர்திணையென்று கூறுவர்தொல்லாசிரியர்; அவர் அலபிற ஏ எ-து மக்களல்லாத பிறபொருளை, அஃறிணையென்மனார் எ-து அஃறிணையென்றுகூறுவர் தொல்லாசிரியர்; அ இருதிணையின் இசைக்குமனசொல் ஏ எ-து அவ்விருதிணைப்பொருள்களையும் உணர்த்தும் சொற்கள் என்றவாறு.

ஏகாரமூன்றும் ஈற்றசை. இனைத்தெனவறிந்தவும்மை விகாரத்தாற்றொக்கது. "இசைப்பிசையாகும்" என்றதனால் இசைப்பு ஒலிக்குமென்னும் பொருடந்ததெனின் சொல்லுக்குப் பொருளுணர்த்தும்வழியல்ல தொலித்தல் கூடாமையின் உணர்த்துமென்னுந்தொழிலினை இசைக்குமென்னுந் தொழிலாற்கூறினார்; இதுவும் ஓர்மரபு வழுவமைதி. பொருளை யுணர்த்துவான் ஒருசாத்தனே யெனினும் அவற்கு அதுகருவியாகவல்லது உணர்த்தலாகாமையின் அக்கருவிமேற்றொழிலேற்றிச் சொல் உணர்த்துமென்றது கருவிகருத்தாவாகக் கூறினார். இவ்வாசிரியர் எவ்விடத்துஞ் சொல்லைக் கருவிகருத்தாவாகக்கூறுமாறு மேலேகாண்க. அது "எல்லாச்சொல்லும் பொருள்குறித்தனவே" என்றாற்போல்வன.

இச்சூத்திரத்தாற் பொருளிரண்டு சொல்லிரண்டென வரையறுத்தார்.

உயர்திணை என்பது—உயர்ந்தவொழுக்கமென இறந்தகால வினைத்தொகை; அது ஆகுபெயராய் மக்கட்பொருளை உணர்த்தி நின்றது.

இதனைப்பண்புத்தொகை யென்பாருமுளர், அது பொருந்தாது; என்
னை : இது காலந்தோன்ற நிற்றலின். மக்கட்சுட்டென்பது மக்களாகிய
சுட்டென இருபெயரொட்டுப் பண்புத்தொகை, சுட்டு-நன்குமதிப்பு;
அது ஆகுபெயராய் மக்கட்பொருளை உணர்த்திநின்றது. **சேனாவரையர்**
இதனைப் 'பண்புத்தொகைப்புறத்துப் பிறந்த அன்மொழித்தொகை'
என்றாராலெனின், இருபெயரொட்டாகுபெயர்க்கும் அன்மொழித்தொ
கைக்கும் வேறுபாடுணராமற் கூறினமையின் அதுபொருந்தாது; என்
னைவேறுபாடெனின், ஈண்டு ஆகுபெயராய்நின்றநன்குமதிக்கும்பொ
ருளும் மக்களையே யுணர்த்திநிற்கும்; அன்மொழித்தொகை அவ்வாற
ன்றி வெள்ளாடையென்றால் வெண்மையும் ஆடையுமன்றி உடுத்தானை
யே உணர்த்திநிற்கும்; இது தம்முள்வேற்றுமை. "அம்மொழிநிலையாத
ன்மொழிநிலையலும்" என்புழி "வெள்ளாடைஎன்புழி தொக்க இரு
மொழிமேலும் நில்லாது உடுத்தானென்னும் அன்மொழிமேனின்ற
து" என்று உதாரணங் காட்டினார் **சேனாவரையரும்** என்றுணர்க. அ
ஃறிணை—அவ்வொழுக்கமல்லவாகியவொழுக்கம் எனப் பண்புத்தொ
கை. அதுபொருளையுணர்த்தி நின்றது, ஆகுபெயராய். என்மனார்
என்றது ஆரீற்று நிகழ்காலமுற்றுவினைத்திரிசொல். என்றிசினோரே
என்பது அவ்வாறு வந்த இறந்தகாலமுற்று வினைத்திரிசொல். "மக்க
டாமேயாறறிவுயிரே" என்று மக்களுயர்ந்தமை மரபியலிற்கூறுப.
அவரலவென்னாது பிறவென்றார் அஃறிணை உயிருள்ளனவும் இல்லன
வுமாகிய இருகூறு மடங்குதற்கு.

"மறங்கடிந்த வருங்கற்பின்" எனவும் "சில சொல்லிற் பல கூந்த
ல்" எனவும், பிறாண்டுஞ் சான்றோர்செய்யுளுள் இன்சாரியை உருபுப
ற்றாது நிற்றனோக்கி **உரையாசிரியரும்** 'ஆயிருதிணையினையும்' என இர
ண்டா முருபுவிரித்துப் பொருள் கூறினார்.

இனிச் **சேனாவரையர்** 'மக்கட்சுட்டு' என்பதற்கு "மக்களாகிய சுட்
டுயாதன்கணிகழும் அது மக்கட்சுட்டு" என்றும், 'ஆயிருதிணை யினிசை
க்குமனசொல்லே' என்பதற்குச் "சொன்னிகழ்ச்சிக்குப் பொருள் இட
மாதலின் ஆயிருதிணையின்கண்ணென எழாவது விரிக்க" என்றும்
பொருள் கூறினாராலெனின், முன்னர் 'மக்களென்றுகருதப்படும் பொ
ருளை உயர்திணையென்ப' என்று அவர் கண்ணழிவு கூறியது ஒரு பொ
ருளிடத்து நின்ற மக்கட்டன்மையாலே ஒருவற்கு அப்பொருள் மக்க
ளென்று கருதப்பட்டதென்று பொருடந்துநின்றது. பின்னர் மக்களா
கிய சுட்டுயாதன்கணிகழுமென்றது நோக்குகின்றவர்க்கு மக்களாகிய
கருத்து யாதொரு பொருளிடத்துத்தோன்றுமென்று பொருடந்தால்
வெள்ளாடையென்னும் ப்ண்புத்தொகைபோல அக்கருத்து மக்களா
தான்மையிற் பண்புத்தொகை அன்றாம். அது மக்கட் சுட்டென்பதற்

கப்பொருள் மக்கட் சுட்டென்றவர் கூறிய பொருளானும் மக்களையே தோற்றுவித்து நிற்றலின் அன்மொழித்தொகை அன்றாம். அன்றியும் ஆசிரியர் ஈண்டு ஒரு பொருணின்று தன்னை யொருவர்க்கு உணர்த்துமாறும் ஒருவன் அதனை உணருமாறும் ஆராய்கின்றாரல்லர்: உயர்ந்த வொழுக்கமென்று முதனூலாசிரியர் கூறிய குறி உலகத்தார்க்கு விளங்கப் பொருள்கூறக்கருதியே அதன்பொருளே பயப்பத் தாமும் மக்களாகிய நன்குமதிக்கும் பொருளென்று அச்சொற்குப்பொருள் கூறினாரென்றுணர்க. அவர் கூறிய உயர்ச்சிதோன்றத் தாமும் நன்குமதிப்பென்று பொருள் கூறினார்; தாமும் உயர்திணையென்றே ஆளுதல்பற்றி. இனி "இசைப்பிசையாகும்" என்றதனால் திணையிடமாகச்சொற்கணின்று பிறவற்றை இசைத்தல்வேண்டும்; அதனான் அது பொருந்தாது, மக்களைச் சுட்டிச்சொல்லுஞ்சொல் உயர்திணைச்சொல் என்றுணர்க. அன்றியும் ஆசிரியர்க்கு அங்ஙனம் பொருள் கூறுதல் கருத்தாயின் "ஆடூஉவறிசொல்" முதலிய சூத்திரங்களெல்லாம் சொன்னிகழ்ச்சிக்குப் பொருளிடமாக ஆடூஉவின்கணிகழுஞ்சொல் மகடூஉவின்கணிகழுஞ்சொல் என்றே சூத்திரஞ்செய்வாராம்; ஆசிரியர் அங்ஙனம்செய்யாது ஒருவன் ஆண்மகனை அறியுஞ்சொல்லும் பெண்டாட்டியை அறியுஞ்சொல்லுமென அறியுமென்னும் பெயரெச்சஞ் சொல் என்னுங் கருவிப்பொருளைக்கொண்டு முடியச்சூத்திரஞ்செய்தலின் ஆசிரியர்க்கு அங்ஙனம்பொருள்கூறுதல் கருத்தன்மையறிக.

மன என்பது வினைபற்றிய அசைநிலை இடைச்சொல்லாய் நின்றது.

End:

செய்யுண்மருங்கினும்வழக்கியன் மருங்கினு
மெய்பெறக்கிளந்த கிளவியெல்லாம்
பல்வேறுசெய்தியி னூனெறிபிழையாது
சொல்வரைந்தறியப் பிரித்தனர்காட்டல்.

இஃது யான் விரித்துக் கூறாதனவற்றை விரித்துக் கூறிக்கொள்க என அதிகாரப்புறனடை கூறுகின்றது. (இதன் பொருள்) 'செய்யுள் மருங்கினும் வழக்கியன் மருங்கினும்' எ-து இவ்வதிகாரத்தின்கட் செய்யுளிடத்தும் வழக்கிடத்தும், 'மெய்பெறக்கிளந்த கிளவியெல்லாம்' எ-து சிலவற்றிற்கு ஞாபகமாகப்பொருள்பெறச் சொல்லப்பட்ட சொற்களெல்லாவற்றையும், 'பல்வேறுசெய்தியி னூனெறிபிழையாது' எ-து செம்பொருளவாய்ப்பலவாக வேறுபடுத்திய விரிவுகளையுடைய அகத்தியத்திற் கூறிய நெறியிற்றப்பாமல், 'சொல்வரைந்து அறியப்பிரித்தனர் காட்டல்' எ-து சொல்லை வேறுபடுத்து மாணாக்கன் உணருமாறு நுண்ணுணர்வுடையோர் உரையானுங் காண்டிகையானும் பிரித்துக்காட்டுக எ-று.—அங்ஙனம் உணரப்பிரித்துக்காட்டுமாறென்னையெனின்: இரண்டாவது "வினையே வினைக்குறிப்பவ் விருமுதலிற்றோன்றும்"

என்றதற்கு மூவகையவாகிய வினைச்சொல்லினும் வினைக்குறிப்புச்சொல்லினும் பிறக்குங் காரணங்கள் எட்டனுட் செயப்படுபொருட்கண்ணே இரண்டாவது தோன்றுமென்றும், அச்செயப்படுபொருள்கடாம் மூவகையவென்றும், மூன்றாவதற்கு ஓதிய வினைமுதல் இயற்றும்வினைமுதலும் ஏவும் வினைமுதலுமென இருவகைய வென்றும், கருவி முதற்காரணமுந் துணைக்காரணமுமென இருவகையவென்றும், நான்காவதற்கு ஓதிய கொடைப்பொருள் இருவகையவென்றும், ஐந்தாவதற்குப் பொருள் நால்வகையவென்றும், அதன்கட் பொரு உறழ்பொருவும் உவமப்பொருவுமாமென்றும், ஏது காரகவேதுவும் ஞாபகவேதுவுமாமென்றும், ஆறாவதற்குத் தற்கிழமை ஐவகைய பிறிதின்கிழமை மூவகையவென்றும், பிறவும் வேற்றுமையோத்தினுட் பிரித்துக்காட்டினும்.—இனி, வினையெனப்படுவதெனப் பொதுப்படக் கூறிய முதனிலைகளை இன்னவாறு வருமெனப் பிரித்துக்காட்டியும், அவை எடுத்தலோசையான் முன்னிலை யேவலொருமை முற்றாய் நிற்குமென்றும், கடதறக்கள் முதனிலையை அடுத்துவருங்கால் இறப்பும், ஈற்றினை அடுத்துவருங்கால் எதிர்வும் உணர்த்துமென்றும், நில் கின்று என்பன நிகழ்காலம் உணர்த்துமென்றும், பகரவகரம் எதிர்காலமுணர்த்துமென்றும், ஏனையெழுத்துக்கள் இன்பெற்றும் பெறாதும் உகரம்பெற்றும் பெறாதும் வருமென்றும், வினைக்குறிப்புக்கள் பண்பாங்காலத்தும் வினைக்குறிப்பாங்காலத்தும் வேறு வேறு பொருளுணர்த்துமென்றும், விரவுவினைகள் பிரிவு வேறுபடூஉஞ் செய்தியவாங்காலத்து முடிக்குஞ்சொல்லானுமன்றித் தம்முள்ளே பாலும் இடமுங் குறித்துக்கொள்ளுந் தன்மையையுடையவென்றும், வினையெச்சங்கள் காலங்காட்டும் எழுத்துக்கள்பெறுமென்றும் அவை திரியுமென்றும், அவை காரணகாரியம் பெறுமென்றும், பெயரெச்சங்களுட் காரணப்பொருட்டாய் வருவன கருவிக்கண் அடங்குமென்றும், பிறவும் வினையியலுட் பிரித்துக்காட்டினும்.—இனி அறுவகைத்தொகையுந் தொகுங்கால் இன்ன சொற்கண்ணே இன்னதொகை தொகுமென்றும், முற்கூறிய வினைச்சொற்கடாமுஞ் சில முக்காலமுஞ் சில ஒருகாலமும் உணர்த்துமென்றும், அவை பெயர்கள் பெறுங்கால் இன்னவாறே பெயர்கள் பெறுமென்றும், பிறவும் எச்சவியலுட் பிரித்துக்காட்டினும்.

இனிச் "சொல்வரைந்தறியப் பிரித்தனர் காட்டல்" என்பதனால் திணையனூரென்பது திணையனாற்செய்யப்பட்ட ஊரெனவுந் திணையனது ஊரெனவும், மூன்றாவதும் ஆறாவதும் விரிந்தது. கடிப்பகை என்பது நான்காவதும் ஆறாவதுங் கடியாகியபகை யெனப்பண்பும் விரிந்தது. ஏழேகாலென்பது ஏழுங்காலுமென உம்மையும் ஏழேகால் நிலமான ஊரென அன்மொழியும் விரிந்தது. சொல்லிலக்கணமென்பது ஆறாவதும் நான்காவதும் ஏழாவதும் விரிந்தது. சொல்லிலக்

கணங்கூறிய நூலென ஆகுபெயருமாய் நின்றது. பொன்மணி யென்பது மூன்றாவதும் ஐந்தாவதும் ஏழாவதும் பொன்னுமணியுமென உம்மையும் விரிந்தது. கருப்புவேலியென்பது நான்காவதும் ஆறாவதும் ஏழாவதும் மூன்றாவதும் ஐந்தாவதும் விரிந்தது. இயலிசையென்பது ஆறாவதும் ஏழாவதும் இயலுமிசையுமென உம்மையும் இயல்கின்ற இசையென வினையும் இயலாகிய இசையெனப் பண்பும் விரிந்தது. உரைவிரியென்பது ஆறாவதும் ஏழாவதும் நாலாவதும் இரண்டாவதும் உரைக்கும் விரியெனவினையும் உரை விரியையுடையதென அன்மொழியும்விரிந்தது. கருத்துப்பொருளென்பது இரண்டாவதும் மூன்றாவதும் ஐந்தாவதும் நான்காவதும் ஆறாவதும் ஏழாவதுங் கருத்தும் பொருளுமென உம்மையும்விரிந்தது. சொற்பொருளென்பது மூன்றாவதும் நான்காவதும் ஐந்தாவதும் ஆறாவதுஞ் சொல்லும் பொருளுமென உம்மையுஞ் சொல்லாகிய பொருளெனப்பண்பும் விரிந்தது. இவ்வாறே பிறசொற்களுந்தொக்கு விரியுமாறு அறிந்து பிரித்துக்காட்டுக. "இவனியாரென் குவையாயினிவனே" என்னும் புறப்பாட்டினுட் சேரனை முன்னிலையாக்கி முடமோசியார் கூறுகின்றகாலத்து இவனென்பது முன்னிலைப்படர்க்கையாய் நின்றது. இவ்வாறு வருவனவும் பிறவும் பிரித்துக்காட்டுக.

கொல் செல் வெல் என்பன லகரம் னகரமாய்த்திரிந்து தனக்கேற்ற றகர ஒற்றுப் பெற்றுப் பாலும் இடமுங் காட்டும். ஆன் ஏறிக் கொன்றான் சென்றான் வென்றான் என நின்றன. கோறு கோறும் சேறு சேறும் வேறு வேறும் என்பன முதனிலை நீண்டு லகர ஒற்றுக் கெட்டுத் தமக்கு உரிய ஒருமைத்தன்மை யீறும் பன்மைத் தன்மை யீறும்பெற்று நின்றன. வாவென்பது வந்தான் வருகின்றான் எனமுதனிலை குறுகிக் கால எழுத்திற்கு ஏற்ற இடைநிலை எழுத்துப்பெற்று வந்தன. கொள்ளென்பது கொண்டான் கோடு கோடும் என ளகாரம் ணகாரமாயுங் கெட்டும் முதனிலை நீண்டும் வந்தன. கைவாரங் கொள்வானைக் கைவாரி யெனவுந் திருவில்லாதானைத் திருவிலியெனவும் அறிவில்லாதானை அறிவிலியெனவும் நூலோதினானை நூலோதியெனவும் இவ்வாறே ஈறு திரிந்து வருவனவும் பிறவும் பிறித்துக்காட்டுக.

வில்லி வாளி வினைக்குறிப்பு முற்றீறு திரிந்தபெயர். வலைச்சி பனத்தி வெள்ளாட்டி முதலியன சகரமுந் தகரமும் டகரமுமாகிய இடைநிலைபெற்றன. செட்டிச்சி கணக்கச்சி முதலியன இச்சென்னும் இடைநிலைபெற்றன. கணவாட்டி இவ்வினைப்பெயர் டகரம் பெற்றது. இன்னும் இவ்வாறே வருவன பிறவும் பிரித்துக்காட்டுக.

கிள்ளிகுடி கிள்ளியுடைய குடிமக்கள் இருக்கும் ஊரெனவும், கீழ்வயிற்றுக்கழலை கீழ்வயற்றின்கண் எழுந்தகழலைபோல்வானெனவும்

அன்மொழித்தொகையாம். வடுகக்கண்ணனென வல்லொற்றடுத்தால் வடுகநாட்டிற்பிறந்த கண்ணனென்றும் வடுகங்கண்ணனென மெல்லொற்றடுத்தால் வடுகனுக்கு மகனாகிய கண்ணனென்றும். "நனிநீடுழந்தன்று மனனேயினியே" என்பது பின்வருங்காலம் உணர்த்திற்று. இனியெம்மெல்லை எனப் பின்னென்னும் இடம் உணர்த்திற்று. ஏனோவென்பது ஒழிதற்பொருள் உணர்த்திற்று. எதிலனென்ப தயலானென்னும்பொருள் உணர்த்திற்று. உண்ணாநின்றானென்புழி ஆவென்பதுஇடைநிலை யெழுத்தென்று உணர்க. வா தா என்றாற்போல்வன மறையுணர்த்துங்கால் வாரான், தாரான், வாராது போயினான், தாராதுபோயினான், வாராதசாத்தன், தாராதசாத்தன் என முதனிலை குறுகாது நிற்குமென்று உணர்க. நன் தீ சிறு பெரு வன் மென் கடு முது இள புது பழ இன் உடை அன் என்பன முதலிய முதனிலைகள் மகர வைகாரம்பெற்று நன்மை தீமை சிறுமை பெருமை என வினைக்குறிப்புப்பெயராய் நிற்குமாறும், இவைதாம் நன்று தீது சிறிது பெரிது வலிது மெலிது கடிது முதிது இளைது புதிது பழைது இன்று உடைத்து அன்று என அஃறிணை வினைக்குறிப்பு முற்றாய் நிற்குமாறும், நல்லன் தீயன் சிறியன் பெரியன் வலியன் மெலியன் கடியன் முதியன் இளையன் புதியன் பழையன் இல்லன் உடையன் அல்லன் என அன்பெற்று உயர்திணை வினைக்குறிப்பாய் நிற்குமாறும், இவைதாம் ஆன் என்னும் ஈறு பெற்று முற்றாயும் படுத்தலோசையான் வினைக்குறிப்புப்பெயராய் உருபேற்றும் பயனிலை கொண்டு நிற்குமாறும் பிரித்துக்கொள்க. இவ்வாறே ஏனைப்பால்களோடும் ஒட்டுக. இவைபண்பாய் நிற்குமாறுமுரிய வென்றுணர்க. இவைதாமே நன்றாய் வளர்ந்தான் வளர்ந்தது தீதாய்ப்போயிற்று போயினான் என வினையெச்சக் குறிப்பாமாறும் நல்லசாத்தன் தீயசாத்தன் எனப்பெயரொச்சக்குறிப்பா மாறுங்காண்க. சிற இழி தீர் என்னும் முதனிலைகள் அல்லீறுபெற்றும் அன்னீறும் ஆனீறும்பெற்றும் முற்கூறியவாறே நிற்குமாறும் சிறந்து இழிந்து தீர்ந்து எனவுஞ் சிறந்த இழிந்த தீர்ந்த எனவும் வினையெச்ச வினைக்குறிப்பும் பெயரொச்சவினைக் குறிப்புமாமாறும்; உணர்க. இவ்வாறு வருவன பிறவும் பிரித்துக்கொள்க.; "சுடரிழாய் * * * பன்மாணும்" என்புழி மானென்னும் இடைச்சொற் பலபடியுமென்னும் பொருட்டாய் நின்றவாறு காண்க. "பிரிதல் வல்லியாரீதுந் துறந்தோர்" என்புழி வல்லாராயென வினையெச்சமாய் நின்றவாறு காண்க. "கால்பொர நுடங்கலிற் கறங்கிசையருவி" என்புழி நுடங்குதலையுடைய அருவியென நிற்குமாறுணர்க. இவைபோல்வன ஓசை வேற்றுமையான் வேறுபடுவனவு முணர்ந்து கொள்க. "நில்லாது பெயர்ந்த பல்லோருள்ளும்" என்புழி; முன்னர் எல்லாரும் உளப்பாடாகக்கூறிய தோழி ஈண்டும் பல்லே முள்ளும் என்றாது தன்னை

நீக்கிக்கூறிய தென்னையெனின் தலைமகன் தன்னைநோக்கி அழிவுதகக் கூறி ஆற்றுனாகி நின்ற நிலைமையைக்கண்டும் அருள் பிறவாது ஆயமுந்தலைவியும் போயவாறும் அதற்குத் தான் அழிவுதக்கு நிற்றலின் அவரோடே போதலாற்றது பின்னர்ப் போயவாறுந் தோன்றக் கூறுகின்றுளாதலிற் பல்லோருள்ளுமெனக் கூறினுளென்று பொருள்கூறுக. "முரசு முழுங்குதானை மூவருள்ளு, மரசெனப்படுவது நினதேயத்தை" என்புழி மூவிரென்றதைதென்னையெனின் புலவன் கூறுகின்ற இவனை ஒழிந்த இருவகைக்குலத்தோரும் இவன் முன்னுள்ளோரும் படர்க்கையராதலின் அம்மூவகைக் குலத்துள்ளோரையுங் கூட்டி முரசு முழங்குதானை மூவரரசுள்ளும் அரசென்றீண்டுச் சிறப்பித்துச் சொல்லப்படுவது அச்சோழன்வழித்தோன்றிய நின்னரசேயென்றுனெனப் பொருள்கூறுக. இங்ஙனஞ் சான்றோர் செய்யுட்கள் இவ்வாசிரியர் கூறிய இலக்கணங்களுளடங்காததுபோன்றுகிடப்பன பிறவும் உளவேனும் நுண்ணுணர்வுடையோர் அவற்றின்பொருட் பயனை நோக்கி ஒருவாற்றான் இக்கூறிய விலக்கணங்களுளடக்கிக் கொள்க. இச்சூத்திரத்தின் கருத்து இவ்வதிகாரத்துட் சிலவற்றிற்கு விரித்துக்கூறாது நுண்ணுணர்வுடையார் உணருமாறு கூறிய விலக்கணங்களும் உள, அவற்றிற்கு முதனூலானும் விரித்துரையானுங் காண்டிகையானு முணர்த்துகவென்று கூறுதலாம். இங்ஙனங் கூறினுர் முடிந்தது காட்டலென்னுந் தந்திரவுத்திக்கினமாகவென்றுணர்க. இங்ஙனங்கூருது யான் கூறப்படும் இலக்கணங்களை முதனூல்களாற் கூறிக்கொள்கவெனின் அது குன்றக்கூறலென்னுங் குற்றமாமென்றுணர்க.

எச்சவியன் முற்றும்.

சொல்லதிகார முற்றும்.

சொல்லதிகாரத்திற்கு மதுரையாசிரியன் பாரத்துவாசி நச்சினுர்க்கினியான் செய்த காண்டிகை முற்றும்.

---

## தொல்காப்பியவுரையில் நச்சினுர்க்கினியரால் காட்டப்பட்ட மேற்கோள்களின் குறிப்பு.

[எழுத்ததிகாரம்].

சூத்திரம்.

| | |
|---|---|
| 6. செய்யுட்களோசை சிதையுங் காலீரளபு ...கொள் | மாபுராணம். |
| செறாஅஅய்வாழியநெஞ்சு | திருக்குறள், 1200. |
| தூஉஉத்தீம்புகைத்தொல்விசும்பு | மலைபடுகடாம். |
| பேஎஎர்த்துக்கொல் | |
| இலாஅஅர்க்கில்லைத்தமர் | நாலடியார், 283. |
| விராஅஅய்ச்செய்யாமைநன்று | ,, 246. |

மரீஇப்பின்னைப்பிரிவு ... ... நாலடியார் 220.
10. விளங்காய் திரட்டினாரில்லைக்களங்கனியை ...மில் ... ... ... ... ,, 103.
33. வருவர்கொல்வயங்கிழாஅய்வலிப்பல்யான் கேளினி ... ... ... ... பாலைக்கலி.
பிடியூட்டிப் பின்னுண்ணுங்களிறெனவு முரைத்தனரே ... ... ... ஷை
40. கண்ணாடண்ணெனக் கண்டுங்கேட்டும்.
கஃஃறென்னுங்கல்லதரத்தம்.
சுஃஃறென்னுந் தண்டோட்டுப்பெண்ணை.
எஃஃகிலங்கிய கையராயின்னுயி...வீடு.
46. அகரமுதல ... ... ... ... திருக்குறள், 1.
50. வருவர்கொல்வயங்கிழாஅய், 33 q. v. ... பாலைக்கலி.
கடியவேகனங்குழாஅய். ... ... ஷை.
குரங்குளைப் பொலிந்த கொய்சுவற்புரவி.
51. அந்நூலை...முந்நூலாக்கொள்வானும் போன்ம்..........
சிதையுங்கலத்தைப்பாயினாற்றிருத்தித்...திசை யறிமீகானும்போன்ம்.
52. மருளினுமெல்லாமருண்ம்.
57. அடைப்பையாய்கோறூ.
புனையிளங்கொங்கையாய்வரும்.
கௌவைநீர்வேலி......கூற்று ... ... வெண்பாமாலை, iv. 23.
64. ஞமலிதந்த மனவுச்சூலுடும்பு.
72. நொஅலையனின்னாட்டைநீ.
111. இரும்புதிரித்தன்னமாயிருமருப்பிற்...தெறிப்ப அகம், 4.
கருங்காலோமைக்காண்பின்பெருஞ்சினை....
தெய்வமால்வரைத்திருமுனியருளால். ... சிலப், 3 - காதை,
எயிறுபடையாக வெயிற் கதவிடா ..தருந் தொழில்சாவா ... ... ... புறம், 3.
115. நின்றுகூறுவலெனவகேண்மதி ... ... ,, 35.
119. எடுத்தநறவின்குலையலங்காந்தள்.
131. கற்பினின்வழாஅநற்பலவுதவி.
அகடுசேர்புபொருந்தியளவினிற்றிரியாது.
140. ஏஎயிவளொருத்திபேடியோவென்றார்.
விண்வத்துக்கொட்கும்.
154. எட்டிப்பூ ... ... ... ... மணிமேகலை.
எட்டிக்குமரனிருந்தோன்றன்னை ... ... ஷை.
157. மழவரோட்டிய.
அவர்க்கண்டெம்முள்.
வக்கண்டுபெயருங் காலையாழ நின்கற்கெழு சிறுகுடி
நப்புணர்வில்லா நயனில்லோர்நட்பு.
மறங்கடிந்தவருங்கற்பின் (See. 1. சொல்) ... புறம், 166.
சில்சொல்விற்பல்கூந்தல் (Sec. 1. சொல்) ... ஷை
வரைபாய்வருடை
புலம்புக்கன்னேபுல்லணற்காளை ... ... புறம், 258.
172. யார்யார்க்கண்டேயுவப்பர்.

யாவதுநன்றெனவுணரார்மாட்டும்.
176. புன்கண்ணுடைத்தாற்புணர்வு.
பாடறியாதானையிரவு.
கண்ணாரக்காணக்கதவு.
179. உடைமையுமின்மையு மொடுவயினொக்கும்.
180. ஒன்றாகநின்றகோவினையடர்க்கவந்த.
191. எல்லார்க்குமெல்லாநிகழ்பவை.
204. ஆங்கக்குயிலு மயிலுங்காட்டிக்க சேவனை...
யோளே.
213. பலாஅஞ்சிலாஅமென்மனார்புலவர்.
232. ஆனநெய்தெளித்துநானநீவி.
ஆனமணிகறங்குங்கானத்தாங்கண்.
234. இறவுப்புறத்தன்ன பிணர்படுதடவுமுதற்...தா
ழை ... ... ... ... நற்றிணை 19.
புறவுப்புறத்தன்ன புன்காயுகாய்.
237. உப்பின்றுபுற்கையுண்கமாகொற்கையோனே.
இடனன்று துறத்தல்வல்லியோரே.
வாளன்றுபிடியாவன்கணாடவர்.
நாளன்றுபோகி ... ... ... புறம், 124.
238. ஈகாண்டோன்றுமெஞ்சிறுநல்லூரே.
கள்வனோவல்லன் கணவனென்காற்சிலம்பு...
யீதொன்று.
246. வெண்கூதாளத்துத்தண்பூங்கோதையர்.
கணவிரமாலையிடூஉக்கழிந்தன்ன.
261. எழூஉத்தாங்கியகதவுமலைத்தவர்...தலின் ... புறம் 97.
பழூஉப்பல்லன்ன பருவுகிர்ப்பாவடி.
275. கழியே, சிறுகுரனெய்தலொடுபாடோவாதே...
தொலிக்கும்.
279. தென்றற்குவீணைக்குச்சேமணிக்குக்கோகிலத்,தி
ற்கன்றிற்கு.
290. யானோதேறேனவர் பொய்வழங்கலரே.
குன்றுறழ்ந்தகளிறென்கோ கொய்யுளை
மாவென்கோ.
299. உயவல்யானைவெரிநுச்சென்றனன்.
300. வெயில்வெரிநிறுத்தபயிலிதழ்ப்பசுங்குடை.
304. விண்ணத்துக்கொட்கும் வண்ணத்தமரர்.
விண்ணத்துக்கொட்கும் விரைசெல்லூர்தி
யோய்.
விண்குத்துநீள்வரைவெற்பகளைபவோர்.
வண்வத்துக்கொட்கும்.
306. தாழ்பெயல்கனைகுரல்கடுப்பப்பண்ணுப்
பெயர்த்து
312. புலம்புக்கனனே ... ... ... ... புறம், 258.
கலம்பெறுகண்ணுளரொக்கற்றலைவர்.
316. இலம்படுபுலவரேற்றகைநிறைய.
இலம்பாடுநாணுத்தரும்-
333. அதுமற்கொண்கன்றேரே.
காப்பும்பூண்டிசிற்கடையும்போகல்.
345. மின்னுச்செய்விளக்கத்துப் பின்னுப்
பிணியவிழ்ந்த.

